Beginning —

अथ गभीरनिर्घोषस्फुटकटकभूषण ।
आनदोदकपूर्णाक्ष. क्षिप्तदृष्टिर्जिनानने ॥ १ ॥

End —

इति सस्तुतो जिनेश्वर! ससारारण्यभीतिभीतेन ।
कृत्वा मयि कारुण्य मोक्षसुख देहि मे स्वामिन्! ॥ ४० ॥

गभीरस्तव समाप्त॰ ॥

(३३) **धर्मलक्षण** प २१६–२२७
(३४) **सिदूरप्रकर** प २२७–२२९

९६. **सिद्धहेमबृहद्वृत्ति** (२–३ पाद त्रुटित जीर्ण) ताडपत्र १३५
कागद ७८, १५"×१$\frac{3}{4}$"

९७ **सिद्धहेमलघुवृत्ति** (आख्यातवृत्ति अपूर्ण) प २३०, १२$\frac{1}{2}$"×१$\frac{1}{2}$"

९८ **सिद्धहेमबृहद्वृत्ति** (,,) प २७५, १६$\frac{1}{2}$"×२$\frac{1}{4}$"

९९ **अभिधानचितामणि** प १६१

End —

इति आचार्यश्रीहेमचन्द्रविरचिताया अभिधानचितामणिनाममालाया सामान्यकाडः षष्ठ ॥

Colophon —

सवत् १३१४ संयमसिरियोग्या पुस्तिका लिखिता । पूज्यश्रीसुमेरुसुदरीमहत्तरामिश्रि(श्रा ?)णामुपदेशत श्रीचित्रकूटमहादुर्गे माणिक्य मह० श्रीतीडागृहिण्या मह श्रीगंगादेवीसुश्राविकया श्रीनाममालापुस्तिका पार्श्वस्थव्रतिना सकाशात् गृहीत्वा तिलकप्रभागणिन्या. पठनकृते समर्पिता । शुभमस्तु ।

१०० (१) **कल्पसूत्र** (मूल) प १–८९, १३"×२$\frac{1}{2}$"

(२) **कल्पसूत्रटिप्पन** by **विनयचन्द्र** प १–३२

Beginning —

सौवर्ण सूत्रभृद्भिर्व्यरचि शुचिफलै॰ श्रीगुरोराज्ञया य
सपूर्णार्थामृतोघै सुविशदसुमन॰श्रेणिपूज्य॰ सुवृत्त ।
पात्राधारोधुनोर्द्ध्वशिवफलकलित सत्क्रियाश्रीशिरस्थ॰
श्रीकल्प पूर्णकुभ स भवतु भविना भावकल्याणसिद्ध्यै ॥ १ ॥
प्रणम्य श्रीमहावीर द्वादशागी गुरूनपि ।
कल्पाध्ययनशब्दाना पर्यायान् काचन ब्रुवे ॥ २ ॥

End —

समाप्त श्रीपर्युषणाकल्पस्य कतिचित्पददुर्गनिरुक्तमिति ।
सैद्धातिकश्रीमुनिचद्रसूरिशिष्या अनूचानगुणा जयति ॥
श्रीरत्नसिहाह्वयसूरिमुख्या यच्छिष्यलेशो विनयेदुसूरि. ।
श्रीविक्रमाद् बाण खेदुवर्षे
चूर्ण्यादि वीक्ष्य स्वगुरोर्मुखाच्च ।
ज्ञात्वानघ पर्युषणाभिधान–
कल्पस्य किचिद् विदधे निरुक्त ॥
यदत्रोत्सूत्रमासूत्रि तत्र मिथ्या[स्तु] दुष्कृत ।
ग्रथाग्रमष्टदशाग्र श्लोकशतचतुष्टय ॥ ग्रथाग्र श्लोक ४१८ ॥

१०१ **त्रिषष्टिशलाकापुरुषचरित्र** (दशमपर्व) ५–३३३, १७″×२″
१०२ **प्रवचनसारोद्धारवृत्ति** प ३१७
१०३ (१) **उपदेशमाला** (प्रा०) गा ५४४ प. १–३८
(२) ,, (पुष्पमाला) by मल० **हेमचन्द्र** गा ५०५ प ३८–८३
(३) **धर्मोपदेशमाला** (प्रा०) गा ८९ प ८४–९५
(४) **क्षेत्रसमास** गा ८९ प ९५–१०४
(५) **विवेकमंजरी** गा १४४ प १०४–११८
(६) **मूलशुद्धिप्रकरण** by **प्रद्युम्नसूरि.** प ११९–१४१

End —

सिद्धातसारहमिण मुद्धाण भव्वाणमणुग्गहत्थ ।
महामईण वसहतसत्थ पज्जुण्णसूरीवयण पसत्थ ॥

(७) **पंचकल्याणक** (प्रा०) प १४१–१५५

Beginning —

तित्थ पवयणसुयदेवय च नमिऊण सव्वभावेण ।
कल्लाणपचएण आदिजिणद नमसामि ॥ १ ॥

End —

पवयणदेवीए नमो जीए पसाएण पचकल्लाण ।
मदमइणा वि रइय कल्लाणपरपरा होउ ॥
ध[र]णिदनमियदेवाहिदेवनामेण पचकल्लाण ।
रइय भवमहणत्थ भवियाण हरउ दुरियाइ ॥ १३४ ॥

चवण गब्भाहरण निक्कमण केवल च नेव्वाण ।
कल्लाणपचएण जिणिद इदेहि निम्मविय ॥ १३५ ॥

(८) **सग्रहणी** by **श्रीचन्द्र** प १५५–१८४

(९) **नवपद** by **जिनचन्द्र** pupil of ककसूरि प १८४–१९९

(१०) **भावनाकुलक** प १९९–२०२

End —

ससारे हयविहिणा महिलारूवेण मडिय पास ।
बज्ज(ज्झ)ति जाणमाणा अयाणमाणा य बज्झति ॥ ३० ॥
इगुणतीस भावना सम्मत्ता ।

(११) **जीवोपालभ** (प्रा०) by **नेमिकुमार** प २०२–२०५

Beginning —

धम्मोवएसजुत्त उवलभ जीव ! तुज्झ दाहामि ।
थेव पि तए न हु रुसियव्व भावउ(ओ) सुणसु ॥ १ ॥

End —

इय सोउ जीव ! तुम **नेमिकुमारस्स** भासिय कुणसु ।
जेण(णु)वलभ न लहसि गच्छसि अयरामर ठाण ॥ २५ ॥
जीवोपलभ समाप्त ।

(१२) **गुरुवेयणकुलक** (प्रा०) by **धनेश्वर.** प २०५–२०६

End —

इय भावणाइ इ(अ)ट्ट वज्जिय त होसु धम्मज्झाणरउ(ओ) ।
जेण हयसयलकम्मो सिवसुक्ख**धणेसरो** होइ(सि) ॥ १५ ॥
इति गुरुवेयणाकुलक समाप्त ।

(१३) **प्रव्रज्याविधान** (प्रा०) प २०६–२०७

End —

जइ सि कयव्ववसाउ धम्मज्झय उसियस्स ।
त वइर गिन्ह लहु रयहरण कम्ममज्जण धीरा ! ॥ २५ ॥
पवज्जाविहाण पगरण समत्त ॥

(१४) **संजममंजरी** (अपभ्रंश) by **महेश्वरसूरि.** प २०७–२१३

Beginning —

नमिऊण नमियतियसिदविंदसिरमउडलीढपयवीढ ।
**पास**जिणेस **संजम**सरूवसकित्तण काह ॥ १ ॥

सजमु सुरसत्थिहि थुयउ सजमु मुक्खदुवारु ।
जहि न सजमु मणि धरिउ तहु दुत्तरु ससारु ॥ २ ॥
सजमभारधुरधरह सहुच्छलिउ न जाह ।
नियजणणिहि जुव्वणहरह जम्मु निरत्थउ ताह ॥ ३ ॥

End —

समणह भूसण गयवसण **सजममजरि** एह ।
कहइ **महेसरसूरिगुरु** कन्नि कुणत सुणेह ॥ ३५ ॥
सजममजरी समत्ता ॥

(१५) **ऋषभपंचाशिका** गा ५० प २१३–२२१
(१६) **श्रावकप्रतिक्रमणसूत्र** प २२१–२२८
(१७) **स्थविरावली** part of **नदीसूत्र** Ends in प २२८–२३४
(१८) **नाणाचित्तप्रकरण** गा ८१ प २३४–२४२

Beginning —

नमिऊण जिण जगजीवबधव धम्मकणयकसवट्ट ।
वुच्छ धम्ममईण धम्मविसेस समासेण ॥
नाणाचित्ते लोए etc

१०४ (१) **चतुर्विंशतिस्थान** (प्रा०) प १–३६, ११″×२″
(२) **आवश्यकनिर्युक्ति** प ५० (त्रुटित)
(३) **आरात्रिक-न्हवणविधि** (अपभ्रंश) }
(४) **धर्मरत्नप्रकरण** } Stary leaves
(५) **सग्रहणी** }

१०५. (१) **पवयणसदोह** (अपूर्ण) प ९५–१०६, १५½″×२″

End —

सारस्सयमाइच्चा विण्हुवरुणा य गद्दतोया य ।
तुसिया अव्वाबाहा अग्गिच्चा दे रिट्ठाया ॥
पवयणसदोहस्स छट्ठ पय सम्मत्त ।

(२) **सग्रहणीरत्न** by श्री**चन्द्रसूरि.** गा २७३ प १०६–१२३

Colophon —

इति **म**लधारिश्री**श्री**चद्रसूरिकृत **सं**ग्रहणीरत्न समाप्त ।

(३) **खेत्तसमास** (नमिऊण सजलजलहर–) प १२३–१२९
(४) **गौतमपृच्छा.** प १२९–१३२

(५) **स्थविरावली** (नन्दीसूत्रान्तर्गता) प १३२–१३५
(६) **श्रावकप्रतिक्रमण** etc प १३५–१३८
(७) **धर्मलक्षण** श्लो० १९ प १३८–१३९
(८) **प्रश्नोत्तररत्नमाला** प १३९–१४०
(९) **पंच नवकार** (प्रा०) प १४०–१४१
(१०) **पवज्जाविहाण** गा ३३ प १४१–१४२
(११) **जीवाणुसट्ठिकुलय** by **यशोघोष** गा २५ प १४२–१४५

End —

इय तत्तभावणाए नियजीय जोणुसासइ सया वि ।
जसघोसभरियभुवणस्स तस्स नस्सइ लहु मोहो ॥ २५ ॥

(१२) **आतुरप्रत्याख्यान** प १४५–१४९
(१३) **विवेकमजरी** प १४९–१५६
(१४) **योगशास्त्र** (४ प्रकाश) प १५६–१८५
(१५) **वीतरागस्तोत्र** प १८५–१९७
(१६) **आत्मानुशासन** प १९७–२०२
(१७) **भक्तामर** प २०२–२०६
(१८) **गंभीरस्तव.** प २०६–२०८

Beginning —

अथ गभीरनिर्घोष स्फुटरोमाचभूषण ।
आनदोदकपूर्णाक्ष क्षिप्तदृष्टिर्जिनानने ॥ १ ॥
सोपालभ सविश्रभ सस्नेह प्रणयान्वित ।
तत स स्तोतुमारब्धो **विमलोमलमानस·** ॥ २ ॥

End —

इत्येव **विमलो** यावत् तद्भावार्पितमानस ।
भूतनाथमभिष्टुत्य पचागप्रणाति गत. ॥ ३९ ॥

(१९) **पार्श्वजिनस्तव.** प २०८–२११

Beginning —

धरणोरगेंद्रसुरपतिविद्याधरपूजित जिन नत्वा ।
क्षुद्रोपद्रवशमन तस्यैव **महास्तवं** वक्ष्ये ॥

End —

भक्तिर्जिनेश्वरे यस्य गधमाल्यानुलेपने ।
सपूजयति यत्नेन तस्यैतत् सफल भवेत् ॥ ३६ ॥

(२०) **पार्श्वनाथाष्टक** (मन्त्रगर्भित) श्लो० ९ प २११–२१२

Beginning —

श्रीमन्नागेंद्ररुद्रस्फुरितफणमणिद्योतिताशामुखश्री-
रोह्रीलाह्रापलक्ष्मीपवनगगनसन्मन्त्रद्युतापराग ।
क्ष्मावायुग्निप्रतीतत्रिपुरविजितदृष्टात्मवक्ष स्थल
सा श्रीवास्पददादिसदर्शितवियदुदय पातु मा **पार्श्वनाथ** ॥

(२१) **आदि-वीरस्तुति** (प्रा०) by **पालित्तसूरि** प २१२–२१३

Beginning —

सयलसुरासुरनमिउ(य) **सेत्तु**ज्जगिरिस्स मडण **वीर** उसह ।
ववगयकम्मकलक **आइ**जिणिद नमसामि ॥ १ ॥

End —

एव **वीर**जिणिदो अच्छरगणसघ[स]थुउ(ओ) भयव ।
**पालित्त**यमय[महिओ दिसउ खय स]णव्वदुरिया ॥ ४ ॥

(२२) **जिनपंचकल्याणकस्तोत्र**(अपभ्रश) श्लो० ३६ प २१४–२१६

Beginning —

नमिवि सिरि**वीर**जिणपाया सवत्तय भवियजणदुरियदारुणकरवत्तय ।
चउवीसजिणपचकल्लाणए चवण-जम्मण-चरण-नाण-निव्वाणए ॥ १ ॥

End —

तित्थकरकल्लाणइ सुक्खनिहाणइ भत्तिमतु जो नरु वहइ ।
**मुणिचंदु** बलगुणसिद्धिठाणु सासु(सु ल)हु लहइ ॥ ३६ ॥

चतुर्विंशतिजिनाना पचकल्याणि(ण)कस्तवन समाप्त ॥ भद्र भवतु ॥

(२३) **एक्कवीसठाण** प २१६–२२१

(२४) **जीवविचार** गा ५१ प २२१–२२४

(२५) **अजितशाति** गा ३९ प २२४–२२९

(२६) **साधुप्रतिक्रमण** प २२९–२३२

(२७) **श्रावकप्रतिक्रमण** प २३२–२३६

**१०६ क्रियारत्नसमुच्चय** by **गुणरत्न** *प ५–४२७, १९$\frac{3}{4}$"×१$\frac{3}{4}$"

Colophon —

प्रथाग्र सबीजक ५७७८ त्रि० **वैकुठे**न लिखित । सघाय क्षेम भूयात् ।

* १८५–३१९ पत्राणि न सन्ति ।

**१०७ उत्तराध्ययन** प १४८, १४"×२"

**१०८. पार्श्वनाथचरित्र** (त्रु०) by **सर्वानद** प १५६–३४५, १८½"×२"

End —

इत्याचार्यश्रीसर्वानदरचिते श्रीपार्श्वनाथचरिते महाकाव्ये श्रीपार्श्वनाथविहार-वर्णनो नाम पचम सर्ग ।

बभूव भूवल्लभवद्यपाद प्रधानधर्मा गणभृत्सुधर्मा ।
स्व सान्वय वीरजिनेश्वरोऽपि शिष्यैर्यदीयै प्रतिपद्यते स्म ॥ १ ॥
विद्याद्या (या) सदन तदन्वयपयोराशी पुरासीदथ
बीज श्रीजयसिहसूरिरतुलक्ष्माचक्रशक्रस्तुत ।
कि चित्र ममतुर्यदीयहृदयोत्सगे कुरगेक्षणा-
स्तन्वग्योपि गुणालिमालिनि ममौ नास्मिन्ननगेपि यत् ॥ २ ॥
कदाचिदिदौ नलिने कदाचिल्लोलस्वभावे सति श्रुव ।
रुह स्पर्धितुमध्युवास स्थिरस्वभावैव यदानन गा (ने गौ) ॥ ३ ॥
श्रीचद्रप्रभसूरिरद्भुतभवाकूपारपारगमो
रगन्मोहमहाकरिव्ययहरिस्तत्पट्टभूषाभवत् ।
आस्य यस्य विभावरीविभुविभापीयूषपेयैर्गवा
सूरिर्दूरयति स्म भस्मित(वचः ?)स्तोमे न कस्य क्लम ? ॥ ४ ॥
स्फीताना नवकल्पसकलितयद्व्याख्यानजल्पाश्रय-
विश्रामालयवैभव नवमित(तै) पीयूषकुडैर्दधे ।
रगन् मगलदीपविभ्रमभर यत्र श्रयन्ते वरा
रक्षापन्नगमौलिरत्नरुचयस्त्वस्यत्तम सचया ॥ ५ ॥
शिष्यस्तस्याथ पाथोनिधिपरिधिधरारत्नसद्धर्मघोष·
सूरि श्रीधर्मघोष समजनि जनितदृष्टिपीयूषवृष्टि ।
सकीर्णं शर्कराभि प्रवचनवचनै स्वादयतो यदीय-
व्याहारैर्हारहूराम धुरमधुकेन (मधुरमधुमधुकोन ?) तापव्यपोह ॥
तत्पट्टप्राच्यपृथ्वीधरशिषरहरि शीलकल्लोललीला-
मीलत्कामाग्निकील समभवदभवशीलभद्रो मुनीद्र ।
तद्विट्जातयातव्यतिकरमकरोत् तत्क्षणक्षिप्तमोह-
प्रत्याकारेण काम विलसदसिसदृग्तीव्रतेन व्रतेन ॥ ७ ॥
अधिदैवत सुधाया जगति चकासाचकार यद्वचन ।
यात्रावाद्यमिवामृतभास प्रास्त्र(श्र)ति मरुतोपि ॥ ८ ॥

अगोद्वर्तनवर्तिकशशिकला स्नानोदक चामृत
कृत्वा यन्मुखधाम्नि लोलरसनादोलाविलासे रत ।
वाच स्वा ताडवितस्मिता चलतया पुसा हरते मन
स श्रीमान् **गुणरत्न**सूरिरभवत् तत्पट्टलक्ष्मीगृह ॥ ९ ॥
अस्त्र(श्र)ति सस्पृह यासा पिन्याकनाकिनो विधु ।
तासा यस्य गिरास्वादविद्केच्छतु नाकिना ॥ १० ॥
श्वेताशुना त्रिजगदगणजागरूक-
भासो यदीययशस. प्रतिवेशिनेव ।
धिग्(क्) क्षीयते कलयता कलुषत्वमत-
र्दोषाकर क सहतेभ्युदय परेषा ? ॥ ११ ॥
सिहासनी(ने?) यदीयशेप्रबु णश्वर कुमुदिनीकुमुदेक्षणाय ।
पार्श्वेषु यस्य विलसति समस्तशुभ्रसाम्राज्यमगलसिताक्षतभानि भानि ॥१२॥
येषामुदात्तवृत्ताना पादातेवासिता श्रिता ।
लभते लघवोप्युच्चैर्गौरव गौरकीर्तय ॥
तेषा प्रसादसरभा[ज्]जीर्यज्जाड्येन सोजसा ।
एतद् व्यधायि शिष्येण श्री**सर्वाणंद**सूरिणा ॥
राजा यावदसावुदारचरित. सलक्ष च्छलद्-
यावद्या(द्ध्या?)मलकालचित्रकमहौषध्या प्रभावादिव ।
अक्षय्यैर्यैर्वस्तुभि. कीर्तिवसुधामासागरामादरात्
तावद् नदतु नदसुप्रदमद श्रीमच्चरित्र विभोः ॥
दितपोधनाना वीरस्य **वीरस्य** च ठक्कुरस्य ।
साहाय्यका**दिदुनिधीन**वर्षे चरित्र **धवलक्क**केद. ॥ १६ ॥

Colophon —

सवत् त्रयोदशषद् त्तरवर्षे श्रा० शुदि द्वितीया शुक्रवारे **सम्वीग्रामे ध्रुव० नागार्जुन**सुतल्हूणाकेन श्री**पार्श्व**नाथचरित्र परिपूर्णपुस्तक सावधानेन लिखित ॥•
भग्न etc यादृश etc

**१०९ सिद्धहेमलघुवृत्ति** (पंचम अध्याय) प १४९, १५$\frac{3}{2}$"×२"

**११० प्रवचनसारोद्धारवृत्ति** प ३१८, १५"×२"

This codex contains a large Pras'asti of 21 verses but as the last folios are wormeaten it is not possible to reproduce the verses completely

सद्वृत्तपर्वपरिपूरिततुगगात्र' पात्र श्रिया विमलमूलकलाविलास ।
यो धर्मसद्गुणविधि स चिर तनोतु **श्री**मालवशः

The wife of Sāwantasimha of Srimālavams'a donated the MS

**१११ अभिधानचिंतामणिनाममालाटीका** by **हेमचन्द्र**

End —

इत्याचार्यश्री**हेमचंद्र**विरचिताया स्वो **चिं**तामणिनाममालाटीकाया सामान्यकाड षष्ठ' य**म**भिधानचितामणेर्नाममालायाष्टीका । छ । ११२० । एव सर्वसख्याग्र १०००० यादृश etc

Colophon —

सवत् १३३७ वर्षे वैशाखशुदि ५ गुरौ अद्येह **अ**णहिलपाटके महाराजाधिराजश्रीमत्**अ**र्जुनदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि महामात्यश्री दवे प्रवर्तमाने महाराजकुमरश्री**सा**रगदेवेन भुज्यमान**मु**द्रवद्या महश्री**म**हिपालप्रभृतिपचकुलप्रतिपत्तौ पूज्यपरोत्तमपरमपूजार्चनीयप्रभुश्री**न**रचद्रसूरिप्रतिष्ठितप्रभुश्री**म**द[न]चद्रसूरितत्पट्टप्रतिष्ठितप्रभुश्री**म**लय चरणचचरीकेन प **स**हजकीर्त्तिना आत्मपठनार्थं **अ**भिधानचितामणिनाम लिखापिता ।

**११२** (१) **कल्पसूत्र** (मूल) प ११४

End —

एकाक्षरगणनया ग्रथाग्रमानमिद्—
एक' सहस्रो द्विशतीसमेत श्लिष्टस्तथा षोडशभिर्विदुत्तु ।
**क**ल्पस्य सख्या कथिता विशिष्टा विशारदै **प**र्युषणाभिधस्य ॥
ग्र १२१६ । छ । मगल महाश्रीः ।

(२) **कालकाचार्यकथानक** (प्रा०) प ११५–१३६

Beginning —

पडिसिद्ध पि कुणतो आणाए देस–खित्त–कालस्स ।
सुज्झइ विसुद्धभावो **का**लयसूरि व ज भणिय ॥
तथाहि– नामेण **ध**रावास अत्थि पुर जत्थ सव्वभयमुक्के ।
वेसमणेण नासीकय व दीसति धणनिवहा ॥

End —

इति श्री**का**लि(ल)काचार्यकथानक समाप्त । ग्रथाग्र गाथा १५० छ

(३) **वैजनाथकलानिधि** ( मराठी ) Paper Manuscript
प ११५, ११"×२"

[ प ४९–५१—आता नगरवर्णन । आटालिया । ऊपरीया । मालीया । गजद्वारे । राजद्वारे । खडकीद्वारे । बाइलवाडे । चौकिया । मनोरम विलासमुरें । प्रसिद्ध सिद्धाचे निवेश । बौद्धाचे विहारा । जिनाची जिनालया । कनकशाला । टकशाला । होमशाला । अध्ययनशाला । गीतनृत्य–वाद्यशाला । जेणशाला । चित्र-शाला । धर्मशाला । मद्यशाला । हस्तिशाला । ब्रह्मशाला । अनेक मठ मढिया । करुआडे नडे चौकीया धवलहारे वसुआरे मालवधे कोचनिबद्धे कोठारे । कोटिआ । कडी । घोडौ डी । [क]लहस । दुआले आवासणिया । सिपणहारी । उधूतपताकास-हश्र(स्र)प्रकटिते । उत्तगगिरिशिखरसकासे देवतायतने । चतुष्पथे २ विचित्रचित्रित सभामडप । स्वर्णकलशालकृतप्रासादसहश्र(स्र) । जैसे गगनसरोवर कनककमलमुकुली अलकृत । मयूर पारावत चकोर राजहस । तेया चित्रा प्रासादावरि इतश्चेतश्च सच-रतेति आकाशसरोवरी जलविहगमा ब्राह्मणभवनी ऋचा यज्ञ सामाचे उद्घोष सायें प्रातरग्निहोत्र हवने मगलप्रकासक होमधूम । सुरभिपरिमलालकृत श्रीमतभवनीं बहु-कते अगरुधूम । क्रय–विक्रयव्यवहारी ससभ्रम हट्टशालाप्रदेश । ठाइ ठाइ सतीसा दडायुधा वे सरावाचे या गरुडी । ताडवलास्यभेदे । भावका नटासि पात्र परिपाठ वाची अभ्यासस्थाने । गोववते आगसरादी विअशाला । घटप्रसादसाधका देसी मा-र्गसाधने । तत वितत घन सुखिर वाद्य वादका सरावाची एकातस्थाने परमप्रबोधा-नदनिर्भरा मुनी वेद्यारयान मठ राउलि वासिह बारी डाविये ऊजिवीये भुजे ती तीं भूमीची भूविलासिणिची धवलहारे ।

प ५८ आता सभावर्णन । तेथ गादिया । मूडे मसौरे । वा(चा)कले । लोहा-सन । वज्रासन । वेतासन । रुक्मासन । स्वस्तिकासन । सेजवटा बाचने । या पाटया तते । तेथ प्राच्योदीच्य दाक्षिणात्य अग च(व)ग पिग कलिग सौराष्ट्र महाराष्ट्र कर्णाट लाट भट मत्स्य पाचाल किरात हूण नेपाल मालवी वेस बर्बरा सिडे सु–लुकी मोरी यादव राठोड कदब कलिपुरा चौहाण प्रार्थतीय नाहल पुलिद भील प्रातवासिए कोकण चोल नरपति सेल्हार गौड गाजणे कानौजिए उक्कल मागध डहलिए पातवणिचे बावर रानीए कटक सेधव वालुका सावार तजर हमीर तुरुक हौ राजे बैठले । तेथ खेआचे या सरला वे झणत्कारझणित । नेतवटाचे सरग परि-हारित । तेथ धर्मपात्रे अर्थपात्रे विश्रामपात्रे कार्यपात्रे विनोदपात्रे प्रसादपात्रे कीर्तिपात्रे स्मार्त राजगुरु धर्माधिकारी आकरणी सधिविग्रही साहासी आतौरवाह्यौ कुमाराध्यक्ष वैद्य जोइसी मलवटे मलासुदाइत । आगा जावाचे पढियार दीवटे डोलीकार सावेरिगते पारवी । महवत मोडुरी साहिए । पडवल बारिआइत ।

प १०२–१०३–आरण्यक हुहु ऊजू च्छदसी उत्तर आरणी च्छदसी उ[त्त]रआ-

रणी च्छदसीपद उत्तरापद आरणीयापद स्तोचु इत्यादि ५२ ग्रथ । प्रथम ४ ग्रथ । गानेसणि एथि वृहद्रथतर । महावैराज । महादिवाकीर्त्यं । ज्येष्ठसामे तीनि । देवव्रुत तीनि ३ । पुरुषघृते ५ । आद्यवृते २१ इत्यादि सामे आठ सहस्र चौदासा । सामी आगले ॥ ७ ॥ सैरध्री कृष्णागरु प्रबोधु जाणै । मयूरवटका सनिभे मुकुलिते चक्रे विडसिकारे भ्रमरसन्निभे । एसे आकुरुलावाउणसिरा जाणे । द्विमालिका व(च)चु पाणी भागु । अभिनौ जाणे । थेरवणीया चिरिमिटा फेडी सोला वर्षांची मवाई करी । वर्षा वय देश जातिभेदे शृगारुचे तैले विपादी प्रबोधु जाणें फणी दोरी दाभण । सुहाकोवी । अलता लेखणी । गाहुआ । इये उपरि करि करणे । या प्रथम ऋतु । गर्भाधान । पुसवन । सीमतोन्नयन । जातकर्म । नामकरण । निष्क्रमण । अन्नप्राशन । कर्णवेधु । चूडाकरण । व्रतचर्या । गोदानिका । अध्ययन । समावर्तन । केशात । दारापरिग्रहण ॥ ७ ॥ ईश्वरीचा ललाटी त्रिपुरदहनावसरीं वारीचडेस्वर खेदातो उपनले । तेया तेया च्यारि खडिया म्हणि पथि स्यारिवर्णः । ब्राह्मणु दीक्षा येतो चड्डुनप्रावार्ये । क्षत्री वाणी नक्र वेफे विलासु धता तिक्त खड्ड विडिगु । त्याग चेटकु । अघोरमुखा चडसद्यमुखी । वाणवामसुखी । विलाससत्पुरुषीं । विडगवदनादात वचडग्व(चडेश्व)रु । जटामुकुटशोभितु । आहुठ सादासी आश्रम । ४ गोत्रे । अठेतातीस सेको राशि वहमु । चडपूजा । शिवदीक्षा । ३६ तत्त्व ८ कल ]

**११३ भावनासग्रह** प ३–१९५, १२′×१$\frac{3}{8}$″

Digambaras also deal in Bhāvanā

Beginning —

Fol 17 ओ नमो वीतरागाय ।

अरिहनन–रजोहनन–रहस्यहर पूजनार्थमर्हत ।
सिद्धान् सिद्धाष्टगुणान् रत्नत्रयसाधकान् स्तुवे साधून् ॥
श्रीमज्जिनेद्रकथिताय सुमगलाय लोकोत्तमाय शरणाय विनेयजन्तो ।
धर्माय काय–वचनाशयशुद्धितोह स्वर्गापवर्गफलदाय नमस्करोमि ॥
धर्म सर्वसुखाकरो हितकरो धर्मं बुधाश्चिन्वते
धर्मेणैव समाप्यते शिवसुख धर्माय तस्मै नम ।
धर्मान्नास्त्यपर सुहृद् भवभृता धर्मस्य मूल दया
धर्मे चित्तमह दधे प्रतिदिन हे धर्म ! मा पालय ॥

सम्यग्दृष्टीना चतस्रो वन्दना· प्रधानभूता. । अर्हत्सिद्धा साधवो धर्मश्चेति ।

End —

Fol 58 इति भावनासग्रहे चारित्रसारे सागारधर्मः समाप्त. ।

११४ हैमबृहद्वृत्ति(त्रुटित) प १६०–५८१

११५ (१) आराधनापताका प १–५१

(२) आउरपच्चक्खाण प ५१–६०

(३) सथारापगरण प ६०–७३

(४) द्वादश भावना (प्रा०) गा १३३ प ७४–८४

End —

बोह(हि)दुल्लभयाए भिगु जमपुत्ता य अद्दगकुमारो ।
मूलगभाया य तहा आराहणा होति एमाई ॥ १३३ ॥

(५) आराहणाकुलक गा १५ प ८४–८५

(६) आराधनासार गा ४८ प ८५–९०

(७) विषयनिदापचाशत् प ९०–९३

End —

एय जे गुणभूरिसूरिवयण कामग्गिउल्हावण
धम्मझाणवणस्स वुड्ढीकरणे मेहबुतुल्ल घण ।
चिन्ति हत धरति कम्मनियले वेरग्गदडेण ते
भजेऊण निरतर वरतर भुजति मुक्खे सुह ॥
विषयनिदापचाशत् ।

(८) शीलगुण गा ४४ प ९३–९५

End —

ससारे उवएसदायगगुरू पुन्नेहि पाविज्जए
सपन्ने वि सुणति तस्स वयण सद्धाए पुन्नाहिआ ।
सोऊण पि कुणति निच्चलमणा जे तमि सव्वायर
त(भ)वा सग्गुणसूरिदेसिपहं पावति ते निव्वुइ ॥ ४४ ॥

(९) आराधनाकुलक गा ३६ प ९५–९७

(१०) जीवानुशासनकुलक गा २९ प ९७–९८

Beginning —

ससारमि असारे नत्थि सुह वाहि–वेयणापउरे ।

End —

इय जाणिऊण एय धम्मायत्ताइ सव्वकज्जाइ ॥

(११) आत्मसबोधकुलक गा २२ प ९९–१००

(१२) कुलक. गा ११ प १००–१०१

Beginning —

निसाविरामे परिभावयामि गेहे पलित्ते किमह सुयामि ? ।

(१३) **दान-शील-तप-भावनाकुलक** गा ४४ प १०१-१०२

(१४) **गौतमपृच्छा** गा ६४ प १०२-१०६

(१५) **णमिपवज्जा** (उत्तराध्ययन अ० ९) गा ६० प १०६-१०८

(१६) **दुमपत्तय** (उत्तरा० अ० १०) प १०९-११०

(१७) **हरिकेशीय अध्ययन** (उत्तरा० अ० १२) प ११०-११३

(१८) **चित्तसंभूइज्ज** (उत्तरा० अ० १३) प ११३-११५

(१९) **महानियठिज्ज** (उत्तरा० अ० २०) प ११५-११७

(२०) **सजइय** (उत्तरा० अ० १८) प ११७-११८

(२१) **सामाचारी** (उत्तरा० अ० २६) प ११८-१३७

(२२) **सग्रहणी** प १३७-१५०

(२३) **जंबूद्वीपप्रकरणादि** गा ११९ प १५०-१७०

(२४) **विचारसत्तरि** प १७०-१७१

(२५) **उपदेशमाला** गा ५४१ प १७१-१९५

(२६) **धर्मोपदेशमाला** प १९५-२००

(२७) **तपविधि** ( स० प्रा० ) प २०१-२०४

(२८) **अजितशांति** प २०४-२०८

(२९) **जीवविचार** प २०८-२११

(३०) **पिंडविशुद्धि** प २११-२१५

(३१) **विवेकमजरी** प २१५-२२०

**११६** (१) **योगशास्त्र** ( त्रिभुवनसार ) प १८

Beginning — ओ नम. सर्वज्ञाय ।

पुनर्जन्म न जायेत यत्स्वरूपनिरूपणात् ।

तज्योति. प्रलयोत्पत्तिस्थितिमुक्तमुपास्महे ॥ १ ॥

पर ज्योतिरुपाश्रित्य क्रमात् तन्मयता गता ।

ये प्रापुः परमानद तान् सिद्धान् सिद्धये स्तुमः ॥ २ ॥

विश्वव्यापारपारीणान् निरीहान् ब्रह्मचारिण ।

सम्यक्त्व(सम्यग्?) ज्ञान-क्रियाधारान् सद्गुरून् नौमि तात्त्विकान् ॥

End of the first Prakās'a—

निर्लेपगार्हस्थ्यौ नाम प्रथम. प्रकाशः श्लोक ५०

End of the second Prakās'a—

इति श्री**त्रिभुनसार**नाम्नि **योगशास्त्रे** गार्हस्पत्यवर्जनो नाम द्वितीयः प्रकाशः।

End of the third—

परमात्मलयानतसुखेच्छोर्यस्य न स्पृहा ।
शरीरेपि स्पृहाबधसुष्टेभ्यष्ट(?)स निस्पृह. ॥ ४९ ॥

(२) **गुर्वादिवार** ? ( भडलीसदृश )  प ३५–४२

(३) **नाडीविचार** (प्रा०)  प ४२

Beginning —

ववसायवड्डुकम्मे विग्गहववहारमज्जणारंभे ।
भोयण–सुरयपसगे दाहिणनाडी सुहा भणिया ॥ १ ॥

End —

जा पवहइ नियनाडी त चिय पाय पुरमि काऊण ।
नीसत(र)ह नियघराओ जइ इच्छह सव्वसपत्ती ॥ ४ ॥

(४) **श्वानरुत**  प ४२–४५

(क) गमनागमनप्रकरण

Beginning —

नाग–नरामरनमिय नमिऊण जिणेसर **म**हावीर ।
वोच्छामि **स**उणसार **सा**णरुय सयललोयहिय ॥
थोवतरंमि गतु वामदिसाए पुणो नियत्ततो ।
साणो सुहसयजणणो असुदरो दाहिणनियत्ततो ॥ २ ॥

End —

धणलाह–दव्वठवणे सगामे तह य दुग्गमपवेसे ।
वाहिज्ञयस्स कज्जे वच्चतो दाहिणो सहलो ॥ २० ॥

**ग**मनागमनप्रकरण ।

(ख) जीवित–मरणप्रकरण

Beginning —

जइ वाहियस्स कज्जे निमित्तमालोइय पइट्ठाणं ।
सुणहो दाहिणचेट्ठो अइरेण दुत्तर कुणइ ॥ १ ॥
जइ पिट्ठुत वट्टइ सुणहो वलिऊण दाहिणदिसाए ।
तो मरइ वाहियत्थो एक(ग)दिणब्भतरे मुणह ॥

End —

कि जपिएण बहुणा दाहिणावद्धाहि मरइ वाहिज्जो ।
तह वामियाहि जीवइ जह भणिय नाहधम्मेण ॥ १० ॥

जीवित–मरणप्रकरण ॥

(५) शकुनविचार प ४५–४७

Beginning —

वाम सियाली होइ सुह दाहिण दुक्ख करेइ ।
पिट्ठट्ठिय बीहामणी अग्गट्ठिय मारेइ ॥ १ ॥
जबू–रासह–सणोइ जइ निग्गमि वामाइ ।
पइसतह जइ दाहिणइ फुडु साहइ कज्जाइ ॥ २ ॥
वामी होविणु दाहिणी जइ सूयरि गच्छेइ ।
तो आभरणविभूसिया ककवितिय दावेइ ॥ ३ ॥

Leaves 48–57 are lost

(६) शनी(नै)श्चर चक्र ( Apabhrams'a ) प ५८

Contains 4 verses on fol 58

(७) ध्वजाध्याय प ५८–५९

Beginning —

शृणु शक्र ! यथातथ्य ध्वजाध्याय शुभाशुभ ।
येन विज्ञातमात्रेण ज्ञाततत्र शुभाशुभ ॥ १ ॥

End —

धान्य महर्घं भवते(विता) अग्निदाहो भविष्यति ।
विक(प)द्यते महीपालाः सग्राम दारुण भवेत् ॥

इति गर्गोक्तसहिताया ध्वजाध्यायो नाम सप्तचत्वारिंशत(त्त)मः ॥

(८) गर्भलक्षण
(९) वर्षालक्षण
(१०) उत्पातदर्शन. } प ६०–६७

(११) सिद्धादेश प. ६७–७२

Beginning —

सिद्धादेश प्रवक्ष्यामि भाषित च चतुर्मुखैः ।
गर्भ वृष्टि तथा वात गर्ज–विद्युत्प्रदर्शन ॥ १ ॥

End —

एव(तत्) तु परम गुह्य ब्रह्मणा कथित पुरा ।
यस्य ज्ञानमिद तस्य वाणी भवति अस्खला ॥

(१२) **गणहरहोरा.** गा २९ प ७२–७५

Beginning —

जीवाजीवयपयत्थवत्थुवित्थारमुणियपरमत्थ ।
नमिऊण इंदभूइ होर चदाइय वोच्छ ॥

(१३) **सामुद्रिक** ( नारदीय ) प ७५–८२

( पुरुषलक्षण श्लो० ३८, स्त्रीलक्षण श्लो० ३८ )

Beginning —

आदिदेवं प्रणम्यादौ सर्वज्ञ सर्वदर्शिन ।
सामुद्रिक प्रवक्ष्यामि सुभग पुरुष–स्त्रियौ(यो ) ॥ १ ॥

End —

सा कन्या वर्जनीया सुतमु(सु)खरहिता भ्रष्टशीला विभ्रष्टा ॥ ३८ ॥
इति नारदीये सामुद्रिके स्त्रीलक्षण समाप्त ।

(१४) (क) folio 83 missing

(ख) **सउणदार(शकुनद्वार)** Incomplete प ८४–८५

Begins with—

जालय–भमरी–गिहधन्न–कीडियालीण ।
लेवफोडविवन्न कारणरहिय भवे अहिय ॥
उव्वेय–कलह–ज्झा–झ(ध)णनासो वाहि–मरण–वसणाइ ।
उच्चाडए(ण)–विएसो सुन्नघर होइ अचिरेण ॥

End —

जस्स सयणीयगेहे महाणसे वा ठवति किरि कागा ।
चम्म रज्जु वाल हड्डु वा सो वि लहु मरिही ॥
सउणदार ।

(ग) **उवस्स(स्सु)इदार(उपश्रुतिद्वार)** प ८५–८७

Beginning —

अह एत्तो कित्तिज्जइ अव्वभिचरिय उवस्सइदार ।
तस्स पसत्थमि दिणे जाए जइण सुयणसमयमि ॥

End —

कन्नुग्घाडणसमणतर खु ज सुणइ नन्नो त्ति ।
आसन्नाणासन्न कलिंति काल कलाकुसला ॥ ७ ॥

उवस्सइदार ।

(घ) छायादा(द्वा)र प ८७–८८

Beginning —

भणियमुवस्सइदार दार छायाए सपय तत्थ ।
छाय बहुभेय पि हु वोच्छ सामन्नओ चेव ॥

End —

एव छायाहितो विस्सम्ममुवगम्म सारयारभो ।
पायेण मच्चुविसय कलेइ काल कलाकुसला ॥ १२३ ॥

छायादार ।

(ङ) नाडिदा(द्वा)र प ८८–९१

Beginning —

एत्तो य नाडिदार नाडि च तिहा भणति तन्निउणा ।
पढमा इडा परा पिगला तह य सुसुमणा य ॥

End —

चदोदये पयईए विवज्जयाणुभवणेण होइ धुव ।
उद्देग–रोग–सेइगहाणि–भय–माणमलिणाई ॥

नाडीदार ।

(च) निमित्तदा(द्वा)र प ९१–९४

Beginning —

भणिय नाडीदार एत्तो भोमाइ अट्ठभेय तु ।
सामन्नेणेव पर निमित्तदार पयपेमि ॥
चकमण–ट्ठाण–निसियण–सोवणभूमी निमित्तविरहे वि ।
दुग्गधत्त जालाउ जस्स दावेइ वि दलईया ॥

End —

लेसुद्देसेण इम निमित्तदार मये(ए) समक्खाय ।
एत्तो भणामि किचि वि सत्तमय जोइसद्दार ॥

छ ॥ निमित्तदार ॥ छ ।

(छ) जोइसदार (ज्योतिषद्वार) प ९४–९५

Beginning —

जमि सिणी नक्खत्ते त नक्खत्त सुहमि दायव ।
चत्तारि दाहिणकरे पाएसु य तिन्नि तिन्नि भवे ॥

End —

धणमिहुणे जा मित्ते असुहगहा जइ हवति तो वाहि ।
साहिति मरणमहवा वियाणसव्वन्नुणा भणिय ॥

जोइसदार ।

(ज) **सुविणगदार (स्वप्नद्वार)** प ९५–१००

Beginning —

इय लेसुद्देसेण जोइसदार पि वन्निय किंतु ।
सुविणगविसय दार दरिसेमो सपय किंपि ॥
वानरि–विगरालित्थि आलिगइ सुविणयम्मि जइ कह वि ।
तह मसु–केस–नहकप्पण च ता मरणमचिरेण ॥ २ ॥

End —

एव इट्ठे व (च) दट्ठव्व
जिणबिंबपूयणा पचनमोक्कारमतसरणाओ ।
तव–नियम–दाणओ तह सुविणे पावे वि मदफलो ॥

सुविणयदार ॥

(झ) **रिट्ठदार (रिष्टद्वार)** प १००–१०६

Beginning —

एव सुविणगदार दसिय दसेमि रिट्ठमिह जम्म ।
न विणा रिट्ठ मरण न जीविय दिट्ठरिट्ठमि ॥
ता सव्वपयते(त्ते)ण रिट्ठ आराहणत्थिणा सम्म ।
सयय निरूवणीय सुगुरुवएसाणुसारेण ॥

At the end of fol 106 b

जस्स ध(प)णट्ठ भतालोय च लहु मरइ सो वि ।
नासा वि जस्स सहसा कुडिला पिडगाउला दढ फुडिया ॥
सवुडच्छिदा य भवे भवतर सो वि अभिलसइ ।
अनि

Some leaves at the end are missing

(१५) **पिपीलिकाज्ञान** (प्रा०) प ११०–१११

Beginning —

घय–नेह–तिल्ल–कुकुसविवज्जिए जइ पिवीलिया हुति ।
गेहस्स पुव्वभाए तो तस्स विणासण मुणह ॥

सयणागमण जाणह जलणाए दाहिणाए निवपूय ।
नेरईए जलवरिस वरुणाए धणरिद्धी ॥ २ ॥
वायव्वाए महिलाविणासण उत्तराए धणलाभो ।
सभवइ देसभग्गो एसाणाए वियाणाहि ॥ ३ ॥
बभट्टाणे पुण उट्ठियाहि घरसामिअस्स आरोग्ग ।
दिट्ठ पिवीलियाहि सत्तदिणब्भितरे जाण ॥ ४ ॥
जइ रत्तमुइगाओ हवति अहवा उ दीव(स)इ जलमि ।
ता होइ दव्वहाणी अह मरणभय गिहत्थस्स ॥ ५ ॥
चुल्ली जइ देहलीए मूले बहुया उ पिवीलिया हुति ।
ता होइ समुच्चलण सत्तदिणे घरकुडुबस्स ॥ ६ ॥
धन्नमि य धणलाहो अविलिठाणमि तह य धणलाहो ।
घरउवरि रोगभय अत्थविणास पयासति ॥ ७ ॥
चुल्लीए उट्ठियाओ अग्गिभय कीडियाउ साहिति ।
देवउल–चच्चरेसु देस गाम विणासति ॥ ८ ॥
पिपीलिकालक्षण ।

## (१६) भूमिज्ञान (?)

Beginning —

खत्तु खणेविणु पूरियइ जइ मट्टी वड्डइ ।
निद्धा भूमि सलक्खणी फलु निवसतह देइ ॥ १ ॥
दर–उद्देही–कोलिय–किमि–कीडा–अलि सप्प ।
रक्खसभूमि भयावणी घरि न वसिज्जइ व(ब)प्प ॥

## (१७) नाडीविज्ञान (?) प ११२–११९

Beginning —

नत्वा वीर प्रवक्ष्यामि देहस्थ ज्ञानमुत्तम ।
देहमध्यस्थिता नाड्यो बहुरूपा. सविस्तरा ॥ १ ॥
ज्ञातव्यास्ता बुधैर्नित्य त्रिकालज्ञानहेतवे ।
तासा मध्ये वरास्तिस्रो वाम-दक्षिण-मध्यमाः ॥ २ ॥

End —

तिर्यगूर्ध्वगरेखाभिरष्टाभिरिह निर्मित ।
यत्रमेकोनपचाशत्कोष्टक स्थापयेद् बुधः ॥ ७४ ॥
तत सृष्टिक्रमेणैव विन्यसेत् तत्र मात्रि(तृ)का ।
स्वरचक्रमेक पूर्वमते हः स्यादजामिधः ॥ ७५ ॥

न (स) ध्यायमानौ(नो) विधिना स्याद् विश्वज्ञानकारण ।
यत स एव दैवज्ञ सर्वज्ञ सर्वसिद्धिकृत् ॥ ७६ ॥
विनीताय सुशीलाय गभीराय महात्मने ।
शिष्याय गुरुणा देयमास्पद सपदामिद ॥ ७७ ॥
प्राणचाराद् विनिश्चित्य स्वस्य भाविशुभाशुभे ।
अशुभप्रतिघाताय कुर्याद् धर्मोद्यम सुधी॰ ॥ ७८ ॥

(१८) **विवेकविलास** (उ १–२) प ११९–१३८

Beginning —

धर्मार्थकाममोक्षाणा सिद्ध्यै ध्यात्वेष्टदेवता ।
भागेष्टमे त्रियामाया उत्तिष्ठेदुद्यत. पुमान् ॥ १ ॥
सुस्वप्न प्रेक्ष्य न स्वप्य कथ्यमह्नि च सद्गुरो ।
दु स्वप्न पुनरालोक्य कार्ये प्रोक्तविपर्यय. ॥ २ ॥

End —

इत्थ किल द्वितीय–तृतीयप्रहरार्धकृत्यमखिलमपि ।
हृदि कुर्वन्त॰ सन्त कृत्यविधौ नात्र मुह्यन्ति ॥ १९१ ॥
**स**र्वव्यवसायविधिप्रक्रम. समाप्त॰ ।

**विवेकविलास** (उ ३–५) Incomplete प १३८–१७०

Beginning —

बहिस्तोभ्यागतो गेहमुपविश्य क्षण सुधी ।
कुर्याद् वस्त्रपरावर्त देहशौचादिक न च ॥

End —

पापाः षट्त्र्यायगा॰ सौम्यास्तनुत्रिकोणकेद्रगा ।
स्त्रीसेवासमये सौम्ययुक्तेदु [॰ पुत्रजन्मदः ॥]

११७ **श्रावक–द्वादशव्रतकथा** (प्रा) * प १५९ गा ३५००

११८ (१) **चैत्यवंदनचूर्णि** (अपूर्ण) † प ७९, १२३/४"×१३/४".

(२) **प्रत्याख्यानचूर्णि** प ११०

११९ **त्रुटितग्रन्थपत्रसंग्रह**

१२० **विक्रमांकाभ्युदय** by **सोमेश्वरदेव** प ८०

End —

---

* अपूर्णा त्रुटिता । † श्लिष्टा शीर्णा च ।

इति महाराजाधिराजश्रीपरमेश्वरसत्याश्रयकुलतिलकश्रीमद्भूलोकमल्ल**सोमेश्वर**-देवविरचिते महाकाव्ये **विक्रमा**काभ्युदयाख्ये जनपदवर्णन नाम प्रथम उल्लास ।
The end is in the margins

**१२१ दशवैकालिकलघुटीका** by **हरिभद्रसूरि** प २०४, १५"×१½"

**१२२ (१)न्यायप्रवेशकव्याख्या** by **हरिभद्रसूरि** प १–२३, १३"×२¼"

Beginning —

सम्यग् न्यायस्य वक्तार प्रणिपत्य **जिनेश्वर** ।
**न्याय**प्रवेशकव्याख्या स्फुटार्था रचयाम्यह ॥
रचितामपि सत्प्रज्ञैर्विस्तरेण समासत ।
असत्प्रज्ञोपि सक्षिप्तरुचिसत्त्वानुकपया ॥ २ ॥

End —

**न्याय**प्रवेशकव्याख्ययावाप्त मया च यत् पुण्य ।
न्यायाधिगमसुखरस लभता भव्यो जनस्तेन ॥

समाप्ता **न्याय**प्रवेशटीका । कृतिराचार्यहरिभद्रस्य । ग्रथप्रमाणमल(?नुष्टुप्)च्छदसा श्लोकशतानि पचाकतोपि ५०० मगल महाश्री ।

(२) **न्यायावतारवृत्ति**(अपूर्ण) प १–२९

Beginning —

अवियुतसामान्य–विशेषदर्शिन **व**र्धमानमानम्य ।
**न्या**यावतारविवृति स्मृतिबीजविवृद्धये क्रियते ॥ १ ॥

(३) **वार्तिक** प ३–४

Beginning —

हिताहितार्थसप्राप्ति–त्यागयोर्यन्निबधन ।

(४) **वार्तिकवृत्ति** (विचारकलिका) by **शांत्याचार्य** प ४–१०१

Beginning —

नम· स्वत प्रमाणाय वच·प्रामाण्यहेतवे ।
**जि**नाय पचरूपेण प्रत्यक्षात्यक्षदेशिने ॥

End —

एव **जि**नवरकथित स्त्रीष्वपि मोक्ष न साधु मन्यते ।
विध्यादिवादिनोपि हि तथापि मिथ्यादृशोऽह्रीका ॥
एव सप्तनया[ बुधैर्जि ]नमताद् बाह्यागमा येभवन्
स्थित्युत्पादविनाशवस्तुविरहात् तान् सत्यताया· क्षिपन् ।
— — यो बौद्धाव(द्धोद)धिबुद्धि(द्ध)तीर्थी(र्थि)कमतप्रादुर्भवद्विक्रमो
मल्लो मल्लमिवान्यवादमजयत् श्रीमल्लवादी विभु· ॥

प्रामाण्यलक्षणमबाध(ध्य)मनन्य[मेय]ने(सू)त्राभिधानिगलि(दि)त विशद यदर्थं ।
मोक्षार्थसाधनपदार्थविधौ पटीय. प्रोक्त प्रमाणमिह शाब्दमिद गरीयः ॥

इति श्रीशांत्याचार्यविरचिताया वार्तिकवृत्तौ आगमपरिच्छेदः ।
सूरिश्चद्रकुलामलैकतिलकश्चारित्ररत्नाबुधि
सार लाघवमादधाति च गिरेर्यो वर्धमानाभिध ।
तच्छिष्यावयव. स सूरिरभवत् श्रीशांतिनामाकृत
येनेय विवृतिर्विचारकलिकानामा स्मृतावा[त्मन] ॥
अवज्ञान हीने समधिकगुणे द्वेषमधिक
समाने सस्पर्धा गुणवति गुणी यत्र कुरुते ।
तदस्मिन् ससारे विरलसुजनेपास्तविषया
प्रतिश्वा(ष्ठा)शा शास्त्रे तदपि न(च) भवेत् कृत्यकरण ॥
ग्रथाग्र २८७३ ।

१२३. **त्रिषष्टिशलाकापुरुषचरित्र** (नवम पर्व) प १९६, ११$\frac{1}{2}$"×१$\frac{3}{4}$"

१२४ (१) **उपासकदशांग** प ६–४५
(२) **अंतगडदशांग** प ४६–८४
(३) **अणुत्तरोववाइ** प ८४–९१
(४) **प्रश्नव्याकरण** प ९२–१५२
(५) **विपाकश्रुत**(अपूर्ण)

१२५ **तिलकमंजरीटिप्पन** by **शांत्याचार्य.** प ८३, १४"×२"

Beginning —

सम्यक् नत्वा महावीर रागादिक्षयकारण ।
उत्पन्नानतविज्ञान देवपूज्य गिरीश्वर ॥ १ ॥
तिलकमजरीनाम्न्या' कथाया पदपद्धति ।
श्लेषभगादिवैषम्य विवृणोमि यथामति ॥ २ ॥

End —

श्रीशांतिसूरिरिह श्रीमति पूर्णतले(ल्ले) गच्छे वरो मतिमता बहुशास्त्रवेत्ता ।
तेनामल विरचित बहुधा विमृश्य सक्षेपतो वरमिद बुध' टिप्पित भो' ! ॥
इद विधाय यत् पुण्य निर्मल समुपार्जित ।
तेन भव्या दिव लब्ध्वा पश्चात् निर्वातु मानवा ॥
ग्रथा० पचाशदधिक सहस्र ॥

**१२६. (१) द्व्याश्रयकाव्य** (प्रा०) by **हेमाचार्य.** प १–७६, १५′×१$\frac{3}{4}$″

End —

इति आचार्यश्रीहेमचंद्रविरचिते प्राकृते महाकाव्ये अष्टमः सर्गः ।

समाप्त च श्रीपृथ्वीचंद्रसूरिशिष्येण हरिचंद्रेण प्रह्लादनपुरे श्रीकुमारपालचरित नाम प्राकृतद्व्याश्रयमहाकाव्य । कार्तिकशुदि एकादश्या रवौ समर्थित । स० ॥ प्रथाग्र श्लोकमान ९५० ॥ यादृश etc

(२) **प्राकृतप्रबोध** by **नरचन्द्र** प १–१२७

End —

इति श्रीमलधारिशिष्यप० नरचंद्रविरचिते प्राकृतप्रबोधे चतुर्थ पादः समाप्त ।

नानाविधैर्विधुरिता विबुधै स(स्व)बुद्ध्या
ता रूपसिद्धिमखिलामवलोक्य शिष्यै. ।
अभ्यर्थितो मुनिरनुज्झितसप्रदाय-
मारभमेनमकरोन्नरचंद्रनामा ॥

**१२७** (१) **चैत्यवंदनचूर्णि**
(२) **वदनकचूर्णि**
(३) **प्रत्याख्यानचूर्णि.** } by **यशोदेव.** १७८, १४$\frac{1}{4}$″×१$\frac{1}{4}$″

End —

आवस्सय–पंचासय–पणवत्थूयविवरणाणु(णु)सारेण ।
पच्चक्खाणसरूव भणिय जसएवसूरिहि ॥

Donor's Prasa'sti —

प्राग्वाटवशे प्रवरे पृथिव्या देदा वर श्रेष्ठिवरो बभूव ।
वसाभिधानश्च तदगजन्मा तस्यापि पोषेत्यभिधस्तनूजः ॥ १ ॥
तस्य च तेजलदेवी जाया पुत्रश्च मलसिहाख्य ।
यो देव–गुरुषु भक्तो झेरडकनगरमुख्यतमः ॥ २ ॥
तस्य च भार्या साउ धर्मासक्ता सुशीलसयुक्ता ।
यस्याश्च मलयसिहो मोहणदेवी च खलु पितरौ ॥ ३ ॥
तस्याश्च पच तनया जूठिल–सारग–जयतसिंहाख्याः ।
सहिताश्च षेतसिंहाभिधमेघाभ्या वसुगुणाभ्या ॥ ४ ॥
पुत्र्यस्तथा देउ सारुधरणूश्च पांचूश्च ।
रूडी मातू नाम्नी सप्तैते सुशीलगुणयुक्ताः ॥ ५ ॥
श्रीमत्तपागणाधिपसूरिश्रीदेवसुन्दरगुरूणा ।
उपदेशतोथ सम्यग् धर्माधर्मौ परिज्ञाय ॥ ६ ॥

साऊ सुश्राविका सौवपुत्रपुत्रीपरीवृता ।
पत्युर्मलयसिंहस्य श्रेयसे शुद्धवासना ॥ ७ ॥
ज्योति करडविवृति तीर्थकल्पाश्च भूरिश ।
चैत्यवदनचूर्ण्यादि श्रीताडपुस्तकत्रये ॥ ८ ॥
पत्तनेऽणहिलाह्वाने वार्द्धिवार्ध्यब्धिभूमिते ।
वत्सरे लेखयामास नागशर्म्मद्विजन्मना ॥ ९ ॥
एषा सबविना मोषाभिवश्राद्धेन धीमता ।
पाता–देदीतनूजेन लेखितेय सुपुस्तिका ॥ १० ॥

१२८ (१) कर्मस्तव (सवृत्ति) by देवेंद्रसूरि ग्र ८३२ प १–९३, ९½"×२"
(२) संग्रहणी by श्रीचंद्रसूरि गा २७३ प १–२७
(३) क्षेत्रसमास गा ८५ प १–८
(४) धर्मलक्षण and बेतालीस दोस प १–४
(५) संसक्तनिर्युक्ति गा ५० प १–४
(६) कल्याणि(ण)कस्तव by आसराज श्लो० ३२ प १–३

End —

नमेर्ज्ञानममावस्याया[मा]श्विने पौर्णिमा नमिच्युतये ।
आशाराजनुता व. कल्याणै पूरयतु जिना' ॥ ३२ ॥

(७) भावनाकुलक (प्रा०) गा ३० १–१६
(८) जीवाणुसट्ठिकुलक (प्रा०) गा २५
(९) भावनाकुलक by सोमदेव गा २४

End —

एय भावणकुलय वल्लहजणमरणसोगदुहिये(ए)ण ।
नियजीवबोहणत्थ रइय ता सोमदेवेण ॥

(१०) भव्यजीवमनोरथ (प्रा०) गा १२
(११) चारित्रमनोरथमाला by धनेश्वर गा ३० (असम्बद्धपत्राणि)

End —

इय भावणासमेया भवा सपाविउमचिरेण ।
चरण धणेसरमुणिवइ भवा पावति परमपय ॥ ३० ॥

१२९. **त्रिषष्टिशलाकापुरुषचरित्र** by **हेमचन्द्र**
(षष्ठ सप्तम च पर्व) प ४०+१-२०७, १७"×२½"

१३० **हैमबृहद्वृत्ति** (अ ६) Damaged प ६१-१७५, १४½"×२"

१३१. **उपदेशमालाकथासमास** (प्रा०) by **जिनभद्र**
प १७१, १४"×१¾"

The right side of the first few leaves is damaged

Beginning —

अरहंतमरिहमरुहं पणमिय सिरिवद्धमाणजिण ।
संखेवेण वोच्छं कहाउ उवएसमालाए ॥

End —

२४ जमालिकथा ।

नीसेसभुवणपडियसिरोमणी जयउ धम्मदासगणी ।
उवएसमालकारी सिस्सो सिरिवीरनाहस्स ॥ १ ॥
उवमियभवप्पवचकहा कया जेण निरुवमा लोए ।
विवरणकारस्स सया तस्स नमो सिद्धसूरिस्स ॥ २ ॥
सुगुरु[गु]णरयणसायरसिरिम असोगसूरिसिस्साण ।
सुयचरणपवरसिरिसालिभद्दसूरिसिस्सेहिं ॥ ३ ॥
सिरिजिणभद्दमुणिंदेहिं सुह्यरो विवरणाणुसारेण ।
उवएसमालपगरणकहासमासो कओ एस ॥ ४ ॥
एय पढति अभिओगजुया गुणति
जाणति जे उवइसति परेमि(सि) सम्म ।
जे वा सुणति हिययमि विभावयति
तेसिं हविज्ज अभिवछियधम्मसिद्धी ॥ ५ ॥

मगल महाश्री ।

१३२ (१) **भवभावना** by **हेमचद्रसूरि** गा ५३१ १-६०, १४"×१½"
(२) **एगवीसठाणपगरण** by **सिद्धसेनसूरि** प ६०-६७

End —

इय इक्कवीसठाणा उद्धरिया सिद्धसेणसूरिहिं ।
चउवीस जिणवरा[णमसेस]साहारणा भणिया ॥ ६६ ॥

एक्कवीसठाणपगरण समत्त ।

(३) **प्रशमरति** by **उमास्वाति** प १–४१
(४) **जीवविचार** by **शातिसूरि** प २–८
(५) **पचकल्लाण** गा १३७ प ८–२९

Beginning —

तित्थ पवयणसुयदेवय च नमिऊण सव्वभावेण ।
कल्लाणपचएण आइजिणद नमसामि ॥ १ ॥

End —

पवयणदेवीए नमो जीए पसाएण पचकल्लाण ।
मदमइणा वि रइय कल्लाणपरपराहेउ ॥ १३७ ॥

पंचकल्लाण समत्त ॥

(६) **आत्मानुशासन** by **पार्श्वनाग** ग्र ७६ प २९–४०
(७) **सूक्ष्मार्थविचारसार** by **जिनवल्लभ** ग्र १५५ प ४०–६३

१३३ (१) **उपदेशमाला** गा ५४२ प १–३९, १३½″×२½″
(२) **मूलशुद्धि** by **प्रद्युम्नसूरि** गा २१४ प ३९–५५
(३) **बारभावना** प ५५–७०

Beginning —

पढममनि(णि)च्चमसरणय ससारो एगया य अन्नत्त ।
असुइत्त आसव सवरो य तह निज्जरा नवमा(मी) ॥

End —

समत्तमि उ लद्धे विमाणवज्ज न बधए आउ ।
जइ वि न समत्तजढो अहवा बद्धाउओ पुव्वि ॥ २१० ॥

भावना समत्ता ।

(४) **खेत्तसमास** (नमिऊण सजलजलहर) गा ८४ प ७०–७६
(५) **सुबाहुचरित्र** प ७६–९१

End —

एय **सु**बाहुचरिय गुणसुट्ठिएण **वी**रेण सिट्ठ तु सुणेवि तुम्हे ।
पत्तेसु दाण विहिणा विहेह लहेह जि मोक्खमणतसोक्ख ॥ २१८॥

**सु**बाहुचरित समत्त ।

(६) **सालिभद्दचरित्त** (प्रा०) गा १७५ प ९१–१०४

Beginning —

सुरवरकयमाण नट्ठनिसेसजाण
भवजलहिसुजाण सत्तहत्थयमाण ।
वियरियवरदाण छिन्नकम्मारि ताण
पयडियवरनाण वदिउ **वद्ध**माण ॥ १ ॥

End —

इय परमपवित्त **सा**लिभद्दस्स एय
चरियमय(इ)विसिट्ठ जे पढती मणुस्सा ।
तह य अणुगुणती जे उ वक्खाणयति
नर–सुरवरसोक्ख भुजिय जति मोक्ख ॥ १७५ ॥

(७) **गोयमभासिय** प १०४–१०९

Beginning —

नरिद–देविदनमसियस्स जिणस्स **वी**रस्स महामुणिस्स ।
सीसो महप्पा खलु **गो**यमो त्ति सुणेह न(मे) तस्स सुभासियाइ ॥
लोए य वेए समहे तहेव तबत्थजत्ताइ सुभासियाइ ।
धम्मत्थकामेसु पवेइयाइ सुणेहि मे(मे) **गो**यमभासियाइ ॥ २ ॥

End —

सम्म पउत्ताइ सुहासियाइ धम्मत्थकामेसु पवेइयाइ ।
सोऊण मे **गो**यमभासियाइ पसन्नचित्ता निहु[य]ा य होह ॥
**वी**रस्स पाए विणओणयगा विलीणमोहे जर–जम्ममुक्के ।
तिविहेण णिच्च चरिया विसुद्धे भावेण तुब्भे सरण उवेह ॥ ४० ॥

उभयमनुष्ट(ष्टुप्)च्छदसा ५५ ॥

**गो**यमभासिया समत्ता ॥

(८) **जीवदयाप्रकरण** (प्रा०) गा ११६ प १०९–११८

(९) **दर्शनसप्ततिका** by **हरिभद्र** गा १२० प ११८–१२८

Beginning —

नमिऊण वद्धमाण सावगधम्म समासओ वोच्छ ।
सम्मत्ताइभावत्थसगय सुत्तनीइए ॥

End —

गोसभणिओ य ति(वि)ही इय अणवरय तु चिङ्घनाणस्स ।
भवविरहबीयभूओ जायइ चारित्तपरिणामो ॥ १२० ॥
दर्शनसप्ततिकाप्रकरण समाप्त ।

(१०) **वीरविज्ञप्तिका** (अपभ्रश) प १२८ (१)

Beginning —

सिरिवीरजिणेसर! तिजयनाह! दुहसयदावानलनीरवाह! ।
भवजलहिजतुनिवडतया(था)ह दय देहि बाय ॥ १ ॥

End —

जा चद दिवायरु नदउ जिणहरु पाम्वउ सिवसुहु सयलजणु ।
जगडिजतउ भवि मोहमहानिवि रक्खि २ जिण! तुह सरणु ॥१३॥
वीरविज्ञप्तिका ।

(११) **पंचाशक** by **हरिभद्र** प ३१

(क) सावयविहिधम्मपगरण १–४

Beginning and end as in **दर्शनसप्ततिका** ।

| | | |
|---|---|---|
| (ख) दीक्षाविधान | गा ४४ | प ४–६ |
| (ग) वदनविधान | गा ५० | प ६–९ |
| (घ) पूयाविहिपगरण | ,, | ९–१२ |
| (ङ) पच्चक्खाणविधि | ,, | १२–१५ |
| (च) स्तवविवि | ,, | १५–१८ |
| (छ) जिनभवनकारणविधान | ,, | १८–२१ |
| (ज) प्रतिष्ठाविधि | ,, | २१–२५ |
| (झ) यात्राविवान | ,, | २५–२८ |
| (ञ) समणोवासगपडिमा | | २८–३१ |
| (ट) साधुधर्म (त्रुटित) | | ३१– |

(१२) **कर्मस्तवभाष्य** गा २५ प १–४

Beginning —

अहिणवगहण बधो उदओ सविवागवेयण तस्स ।
अविवागे यणुभवणा अणुदयपत्तस्सुदीरणया ॥ १ ॥

End —

सुहुमे दुरुत्तरसयपणयालमिगुत्तर च पचासी ।
पचासी य अजोगी पयडीण सतवोच्छेवो ॥ २४ ॥

कर्मस्तवभाष्य समाप्त ।

१३४ **हैमलघुवृत्ति** (आख्यात) प २–१४५, १४½"×१½"

१३५ (१) **कल्पसूत्र** (मध्ये त्रुटित) प १२१, १२½"×२¼"

(२) **कालकाचार्यकथा** (त्रुटित)

१३६ (१) **उपदेशमाला** प १–७९, १०½"×२¼"

(२) **धर्मोपदेशमाला** प ८०–९४

(३) **मूलशुद्धिप्रकरण** प ९४–१२७

(४) **कल्याणकप्रकरण** प १२८–(अपूर्ण त्रुटित)

same as १३२ (५)

१३७ **संग्रहणीवृत्ति** by **मलयगिरि.** प २९८

End —

इति श्रीमलयगिरिविरचिता संग्रहणीटीका समाप्ता ।

सवत् १२९० वर्षे माघवदि १ रवौ पुस्तकमिद लिखित ।

१३८ **संघाचारटीका** by **देवेन्द्रसूरि** प २५६, १८½"×२½"

End —

इति श्रीसघस्य प्रतिदिनमवश्य कृतविधौ
सुधर्मानुष्ठाने प्रकटमधिकार॰ प्रथमक. ।
सदार्हच्चैत्याना विहितविधिवद् वदनवर
श्रुतादाम्नायाच्च प्रकृतविवृति पारमगमत् ॥

श्रीदेवेंद्रसूरिविरचिताया श्रीसंघाचारटीकाया चैत्यवदनाधिकार॰ प्रथम॰ समाप्त॰ ॥

१३९ **अनेकार्थसग्रह** by **हेमचंद्र** प १२४, १८¼"×२"

१४० (१) **पुष्पमाला** by **हेमचद्र** (मलधारी) प १–३२

(२) **सग्रहणी** प. १–३७

Beginning —

निट्ठवियअट्ठकम्म वीर नमिऊण तिगरणविसुद्ध ।
नाणमहतमहत्थ ता संगहणि त्ति नामेण ॥ १ ॥

End —

ज उद्दिय सुयाओ पुव्वायरियक्कमसह् य समइए ।
खमियव्व सुयधरेहि तहेव सुयदेवयाए उ ॥ ३६६ ॥

सघयणी सम्मत्ता ॥

१४१ **प्रकरणसंग्रह्** प २५२, १३$\frac{3}{4}$″×२$\frac{1}{2}$″

| | |
|---|---|
| (१) **आवश्यकनिर्युक्ति** | प १–११७ |
| (२) **दशवैकालिक** | ११८–१३९ |
| (३) **ओघनिर्युक्ति** | १४०–१८० |
| (४) **पिंडविशुद्धि** by **जिनवल्लभ** | १८१–१८५ |
| (५) **उपदेशमाला** | १८५–२०६ |
| (६) **धर्मोपदेशमाला** | २०७–२१० |
| (७) **मूलशुद्धि** by **प्रद्युम्नसूरि** | २१०–२१८ |
| (८) **विवेकमजरी** | २१८–२२३ |
| (९) **योगशास्त्र** (४ प्रकाश) | २२३–२४० |
| (१०) **वीतरागस्तव** | २४१–२४९ |
| (११) **आत्मानुशासन** | २४९–२५१ |
| (१२) **लघु अजितशांति** (अपभ्रंश) by वीरगणि | २५१–२५२ |

Beginning —

गब्भ अवयारि **सो**हम्मसुरसामिओ जणणि जेम्बि थुणइ भत्तिभरनामिओ ।
ति जिण इक्खाग–**कु**रुवसभूसणपरा **अ**जिय–**स**तीउ नदतु मगलकरा ॥

End —

एहु सवच्छरे पक्खि–चउमासए
**अजिय–सतित्थओ** भणइ जो निसुणए ।
कहइ गणि**वीरगणि** भवियजण अग्गए
असु(सु)हु तसु जाइ सुहु सयलु सपज्जए ॥ ८ ॥

लघु **अ**जित–शातिस्तव· समाप्त ।

Prs′asti of the donor —

नि[ ]श्रेयसश्रीसदन· श्री**वी**र श्रेयसेस्तु व ।
त्रिलोकी विस्मितानद रसते यद्वच सुधा ॥ १ ॥

औदार्यादिगुणग्रामरत्नै रत्नाकरोपम. ।
श्रीमान् श्रीमालवशोय विद्यते भूमिभूषण ॥ २ ॥
तत्रासीद् गुणसपूर्ण पूर्णसिहाभिध सुधी ।
तस्य पत्नी यशोदेवी सतीवर्गशिरोमणि. ॥ ३ ॥
उदय नीतो दिनकृत शशीव तेनेह दीपितो दीपः ।
नयन च कृत जगता जिनवचन लेखित येन ॥ ४ ॥
इत्थमाकर्ण्य कर्णाभ्या सुधारससरस्वती ।
श्रीमत्कीर्तिसमुद्र स्रूणा सरस्वती ॥ ५ ॥
धनपालाभिधानेन तयोर्ज्येष्ठेन सूनुना ।
अनुजस्याथ पुण्याय महीपालस्य धर्मिण. ॥ ६ ॥
आशाप्रभाभिधा ।
आवश्यक बधोर्लेखित धर्मशासन ॥ ७ ॥
मगल भवतु सर्वसज्जने मगल भवतु धर्मकर्म्मणि ।
मगल भवतु पाठकजने [मगल] भवतु लेखके सदा ॥
छ । छ । प्रशस्ति कृतिरियमाशाप्रभस्य । मगल महाश्री ।

| | | | |
|---|---|---|---|
| **१४२.** | (१) **एगवीसठाणप्रकरण** | प १–८ | १२⅘″×२¾′ |
| | (२) **पंचाशक** | प १–६८ | |
| | (३) **कर्मस्तव** | ६९–७४ | |
| | (४) **कर्मविपाक** by **गर्ग** | ७४–८६ | |
| | (५) **शतकप्रकरण** | ८६–९५ | |
| | (६) **सत्तरिप्रकरण** | ९६–१०१ | |
| | (७) **आराधनाप्रकरण** | १०२–१२३ | |
| | (८) **सग्रहणी** | १२४–१५१ | |
| | (९) **ऋषिमंडल** (अपूर्ण) | १५२–१८६ | |

**१४३ पंचाशक.** प १५४

End—

सवत् १२८८ वर्षे शाके ११५४ वैशाषशुदि ९ शुक्रदिने चंद्रावत्या लिखित । शुभ भवतु लेखक–पाठकयो । यादृश etc

**१४४. प्रशमरतिवृत्ति** by **हरिभद्रसूरि.** प १९२

Beginning —

ओं नमो वीतरागाय ।

उदयस्थितमरुणकर दिनकरमिव विमलकेवलालोक ।
विनिहतजडतादोष सद्वृत्त वीरमानम्य ॥ १ ॥
वक्ष्यामि प्रशमरतेर्विवरणमिह वृद्धवृत्तित किंचित् ।
जडमतिरप्यकठोर स्वस्मृत्यर्थ यथाबोध ॥ २ ॥
यद्यपि मदीयवृत्ते. साफल्य नास्ति तादृश किमपि ।
सुगमत्व–लघुत्वाभ्या तथापि तत् सभवत्येव ॥

इहाचार्यः श्रीमानुमास्वातिपुत्रस्त्रासितकुतर्कजनितवितर्कप्रपच पचशतप्रकरण-प्रबंधप्रणेता वाचकमुख्यः समस्तश्वेताबरकुलतिलक etc

End —

यत्नालये मद्गुरूपशोभे सन्मगले सद्बुधराजहसे ।
तारापथे वा सु(चाशु)कविप्रचारे श्रीमानदेवाभिधसूरिगच्छे ॥ १ ॥
भव्या बभूवु. शुभशस्यशिष्या अध्यापका श्रीजिनदेवसज्ञा ।
तेषा विनेयैर्गुरुभक्तियुक्तै प्रज्ञाविहीनैरपि शास्त्ररागात् ॥ २ ॥
श्रीहरिभद्राचार्यै रचित प्रशमरतिविवरण किंचित् ।
परिभाव्य वृद्धटीका सुखबोधार्थ समासेन ॥ ३ ॥
अणहिलपाटकनगरे श्रीमज्जयसिंहदेवनृपराज्ये ।
बाण–वसु–रुद्रसख्ये विक्रमतो वत्सरे व्रजति ॥ ४ ॥
श्रीधवलभाडशालिकपुत्रयशोनागनायकवितीर्णे ।
सदुपाश्रयस्थितैस्तै समर्थित शोधित चेति ॥ ५ ॥
यदिहाशुद्ध किंचित् छद्मस्थत्वेन लिखितमस्माभि. ।
तच्छोध्य धीमद्भि· सम्यक् सचिन्त्य समयज्ञै ॥ ६ ॥
शास्त्रस्य पीठबधः १ कषाय २ रागादि ३ कर्म ४ करणा ५ र्था· ६ ।
अष्टौ च मदस्थाना· ७ आचारो ८ भावना ९ धर्म १० ॥ ७ ॥
तदनु कथा ११ जीवाद्या १२ उपयोगा १३ भाव १४ वदिव द्रव्य १५ ।
चरण १६ शीलागानि १७ च ध्यान १८ श्रेणी १९ समुद्घाता २० ॥८॥
योगनिरोधः क्रमश २१ शिवगमनविधानमत्यफलमस्य ।
२२ द्वाविंशत्यधिकारा मुख्या इह धर्मकथिकाया ॥ ९ ॥
व्याख्यामेतस्य शास्त्रस्य कृत्वा पुण्य यदर्जित ।
तेन भव्यो जनः सर्वो लभता शर्ममुत्तम ॥ १० ॥

धात्री धात्रीधरा यावद् यावच्चद्र–दिवाकरौ ।
तावदज्ञानविध्वसा नद्यादेषा सुपुस्तिका ॥ ११ ॥
ग्रथाग्रमत्र जात प्रत्यक्षरगणनत॰ ससूत्रायाः ।
सद्वृत्तेरष्टादश शतानि श्लोकमानेन ॥ १२ ॥

अकतो ग्रथ० १८०० । इति श्रीबृहद्गच्छीयश्रीहरिभद्रसूरिविरचिता प्रशमरतिवृत्तिः समाप्ता ।

Colophon —

स० १२९८ कार्तिकसुदि १० बुधवारे प्रशमरतिपुस्तिका लिखितेति । मगल महाश्री । शिवमस्तु लेखक–पाठकयो ।

**१४५ सप्ततिकाटीका** by **मलयगिरि.** प १२२

End —

निरुपममनतमनघ शिवपदमधिरूढमपगतपारु(?पासु)लक ।
दर्शितशिवपुरमार्ग वीरजिनमत परमशिव ॥
यस्योपान्तेपि सप्राप्ते प्राप्यते सपदोनघा ।
नमस्तस्मै जिनेशश्रीवीरसिद्धातसिधवे ॥ २ ॥
यैरेषा विषमार्था सप्ततिका सुस्फुटा कृता सम्यक् ।
अनुपकृतपरोपकृतश्चूर्णिकृतस्तान् नमस्कुर्वे ॥ ३ ॥
प्रकरणमेतद् विषम सप्तति(त्या)ख्य विवृण्वता कुशल ।
यदवापि मलयगिरिणा सिद्धि तेनाश्नुता लोक. ॥ ४ ॥
अर्हतो मगल सिद्धान् मगल सयतानह ।
अशिश्रिय जिनाख्यात धर्म परममगल ॥ ५ ॥
इति श्रीमलयगिरिविरचिता सप्ततिकाटीका समाप्ता ।

Colophon —

सवत् १२२१ वर्षे चैत्रशुदि ४ बुधे । ग्रथाग्र ३७८० ॥

| | | | |
|---|---|---|---|
| **१४६.** | (१) **ओघनिर्युक्ति** | ग्र ११९० | प १–११२ |
| | (२) **पिडनिर्युक्ति** | ग्र ७०३ | प ११३–१९३ |
| **१४७.** | **शिशुपालवध** Damaged | | प २२३ |
| **१४८.** | (१) **आराधनाकुलक** by **सोमसूरि** | | प ७२–८४ |
| | (२) **जीवाणुसट्ठिसधि** | (अपभ्रश) | प ८५–९२ |
| | (३) **अनाथिसंधि** | („) | प ९२–१०१ |
| | (४) **अवंतिसुकुमालसंधि** | („) | प १०१–१२१ |

१४९ (१) **सग्रहणीरत्न** by मलधारि **श्रीचंद्रसूरि** प १–२०
(२) **क्षेत्रसमास** (नमिऊण सजलजलहर०) प २०–२८
(३) **लघुसंग्रहणी** by **हरिभद्र** प २८–३०
(४) **कर्मस्तव** गा ५४ प ३०–३३
(५) **कर्मविपाक** गा १६८ प ३३–४४
(६) **गौतमपृच्छा** गा ६४ प ४४–४९
(७) **जीवविचार** by **शांतिसूरि** गा ५१ प ४९–५२
(८) **पिडविशुद्धि** गा १०४ प ५२–६१
(९) **अजितशांति** गा ४० प ६१–६५
(१०) **लघु अजितशांति** (अपभ्रश) गा ८ प ६५–६६
(११) **मिथ्यात्वपरिहारकुलक** (प्रा०) गा ३० प ६६–६८
(१२) **सप्तषष्टि सम्यक्त्वभेद** (प्रा०) गा १६ प ६८–६९
(१३) **उपदेशगाथा** (सम्यक्त्वविषये) गा २६ प ६९–७१
(१४) **नवतत्त्व** गा १६ प ७१–७२

१५० (१) **वसंतराज** (शाकुनग्रन्थ अपूर्ण निरुपयोगि)
(२) **योगसार** ? (सविवरण ?)

१५१ (१) **कल्पसूत्र** } प ९७
(२) **कालिकाचार्यकथा** (प्रा०) गा १५४ }

१५२. **हैमलघुवृत्त्यवचूरिका** (आख्यात and कृत्) by **धनचंद्र**
८०+६२, ९"×२"

End —

पडितधनचद्रेण व्याकरणलघुवृत्त्यवचूरिका श्रुतोद्धृता च सुगुरो· श्रीमद्देवेद्रसूरित· श्रीसिद्धहेमव्या० कृतस्य

१५३ **हैमलघुवृत्ति** (आख्यात) प १६२, १३"×१¾"

१५४ **शांभलीमत** by **दामोदरगुप्त** *प १८३+२–१५, १५"×२"
गाथा १०३९, ग्रथाग्र १२९०

Beginning —

ओ नम शि[illegible]य ।

स जयति सकल्पभवो रतिमुखशतपत्रचुबनभ्रमर ।
यस्यानुरक्तललनानयनातविलोकित वसति ॥ १ ॥

---

* अन्तिमपत्रत्रय शकलरूपम्, २–१२ पत्राणि शीर्णानि ।

अवधीर्य दोषनिचय गुणलेशे सन्निवेश्य मतिमार्या ।
शुभल्या मतमेतद् दामोदरविरचित शृणुत ॥ २ ॥
अस्ति खलु निखिलभूतलभूषणभूता विभूतिगुणयुक्ता ।
युक्ताभियुक्तजनता नगरी वाराणसी नाम ॥ ३ ॥
अनुभवतामति यस्यामुपभोगान् [कामत॰] शरीरवता ।
शशधरखण्डविभूषणदेहलय किल न तु प्रापः ॥ ४ ॥
चद्रविभूषितदेहा भूतिरता सद्भुजग[परि]वारा॰ ।
वारस्त्रियोपि यस्या पशुपतितनुतुल्यता याता ॥ ५ ॥

**विकराला** advises मालती—

Fol 25 — वात्स्यायन–मदनोदय–दत्तक–विटपुत्र–राज[पुत्रा]द्यै ।
उच्छ्वसित यत् किचित् तत् तस्या हृदयदेशमध्यास्ते ॥ १२२ ॥
भरत–विशाखिल–दत्तिल–वृक्षायुर्वेद–चित्र–सूत्रेषु ।
पत्रच्छेदविधाने भ्रमकर्मणि पुस्तशास्त्रेषु ॥ १२३ ॥

The **हारलतोपाख्यान** begins on fol 35, with verse 173 and ends in fol 96, verse 495

The names **कुसुमपुर, पाटलिपुत्र, आबु, सुन्दरसेन** etc occur in this **उपाख्यान**

Fol 108 — रणशिरसि हते वज्रे वज्रोपमयत्रनिर्गतग्राव्णा ।
प्राणान् मुमोच गणिका न मत्रविधिना हृता नाम ॥ ५३१ ॥
कालवशेनायासीत् पचत्व दाक्षिणात्यमणिकठ ।
प्रेमोपगता वेश्या तेनैव सम जगाम भस्मत्व ॥ ५३२ ॥
भास्करवर्मणि याते सुरवसतिं भूभुजा निवार्यमाणापि ।
तद्दु॰खमसहमाना प्रविवेश विलासिनी दहन ॥ ५३३ ॥
ज्वालाकरालहुतभुजि नग्नाचार्ये पपात नरसिह॰ ।
तस्मिन्नेव शरीर निजमजुहोच्छोकपीडिता [दा]सी ॥ ५३४ ॥
प्रीतिभराक्रातमतिस्त्रिदशालयजीविका क्रमोपनता ।
अगीचकार मुक्त्वा कदबका भट्टविष्णुमामृत्यो ॥ ५३५ ॥
देशातरादुपेते प्रसादमात्रेण वीक्षिते विनते ।
पादयुग त्यजति न वामदेवस्य समिति हतस्य ॥ ५३६ ॥
भट्टकदबकतनये याते वसति परेतनाथस्य ।
चक्रे देहत्याग रणदेवी वारयोषिता मुख्या ॥ ५३७ ॥

अस्यामेव नगर्या द्रविणमदात् कालसंचितमशेष ।
प्रेमाकृष्टा गणिका भट्टात्मजनीलकठाय ॥ ५३८ ॥

589 Aryās up to नि सारण Dismissal of the lover

Fol 120 — इदानी नि सारणोपाय व्याख्यास्यामः ।

Fol 129 —भिन्नसन्धान inducing the man who was dismissed before as he had no wealth but who has now become rich 47 verses in all

Fol 144 — शृणु सुश्रोणि ! यथास्मिन् कलशेश्वरपादमूलमजर्या ।
प्रवराचार्यदुहित्रा राजसुतश्चर्वितश्च मुक्तश्च ॥

इदानी मजर्य्याख्यानमाह 119 verses in all

New numbering of verses for this आख्यायिका has been given here

मजरीकथा does not end at the end of the second century of Aryas

End (i e verse 318) —

अयि सुभ्रवेतत् क्रियते
आततान रतिकर्म ॥ ३१८ ॥

ग्रन्थाग्र १२९० द्वादशशतानि नवत्यधिकानि ॥

Some portion of the work, seven folia in all are damaged The folia containing the stanzas 200–300 are lost, and amongst the stanzas 300–319 only portions remain

१५५ (१) उपदेशमाला by धर्मदासगणि गा ५४३ प ६०, १२½"×२"

Beginning —

नमिऊण जिणवरिंदे इद–नरिंदच्चिए तिलोयगुरू ।

End —

अक्खरमत्ताहीण ज ज गुणिय अयाणमाणेण ।
त खमउ मज्झ सव्व जिणवयणविणिग्गया वाणी ॥ ५४३ ॥

(२) उपदेशमाला by हेमचंद्रसूरि गा ५०५ प ६०–१२०

(३) आवश्यकस्वरूप गा ३१७ प १२१–१५५

Beginning —

जह गणहरेहि भणिय सुत्तमि तहा परपराणुगय ।
आवस्सगस्सरूव साहेमि तहा समासेण ॥ १ ॥

End —

पच्चक्खाणमिण सेविऊण भावेण जिणवरुद्दिट्ठ ।
पत्ता अनतसत्ता सासे(सय)सुक्ख लहु मुक्ख ॥ ३१७ ॥

(४) **सग्रहणीरत्न** by **श्रीचद्रसूरि** प १५५–१८०
(५) **जबूद्वीपसमास** गा ११२ प १८०–१८८
(६) **विवेकमंजरी** गा १४५ प १८९–२०१
(७) **उपदेशकंदली** प २०१–२१५
(८) **पिडविशुद्धि** प २१६–२२४
(९) **धर्मोपदेशमाला** प २२५–२३४
(१०) **ज्ञानप्रकाशकुलक** (अपभ्रश) गा ११४ प २३४–२४५

Beginning —

देवह देवु सु जगी जयउ तिहुयणगुरु जिणराउ ।
अज्ज वि नाणपसाउ जसु पसरइ पयडपहावु ॥ १ ॥

End —

जहठियगुणलक्खा जे हवतीह दक्खा विसयसुहविरत्ता अप्पनाणप्पसत्ता ।
सिरि**जिणपट्ट**लग्गा भववग्गा समग्गा परमपयसुहाण जायइ ते निहाण ॥११४॥

**ज्ञानप्रकाश**कुलक रचितमिद श्री**जिनप्रभा**चार्यै ।
श्री**शत्रुंजय**सत्तीर्थसेविभिर्मोहनाशाय ॥ ११५ ॥

(११) **आत्मानुशासन** प २४७–२५६
(१२) **मूलशुद्धि** प २५६–२७४
(१३) **योगशास्त्र** (४ प्रकाश) प १–३४
(१४) **वीतरागस्तव** प ३४–४८
(१५) **भक्तामर** प ४८–५३
(१६) **नवतत्त्व** प ५४–५८
(१७) **एगवीसठाणपगरण** प ५८–६२
(१८) **लघुरत्नत्रय.** प ६३–६५
(१९) **परमसुखद्वात्रिंशिका** by **जिनप्रभ** (आगमिक).प.६५–६७
(२०) **धर्मलक्षण.** प ६७–६८
(२१) **प्रश्नोत्तररत्नमाला** प ६८–७०
(२२) **दशवैकालिक** (४ अध्ययन) प १–९

(२३) **चउसरण.** प. ९–१२

(२४) **साधारणस्तव** (प्रा०) प १२–१३

१५६ **पंचाशकं** (२०) प १२९

Beginning —

नमिऊण **वीर**नाह् वोच्छ नवकारमाइउवहाण ।
किंपि पइट्ठाणमह विमूढसमोहमह्णत्थ ॥

End —

इय भूरिहेउजुत्तीजयमि बहुकुसलहिए मग्गे ।
कुग्गह**विर**हेण उज्जमह महह जइ मुक्खसुह्मणह ॥
इति विंशतितम प्रकरण समाप्त ।

१५७ **न्यायकुसुमांजलिटीका** by **वामध्वज** प १५५, १२½″×१⅘″

Beginning —

यद् योगिमुख्यैरपि नैव गम्य यत् कारण सर्ग-लय-स्थितीना ।
यदर्धदेहस्थितसुदरीकमीशस्य तद्रूपमह नमामि ॥ १ ॥
भुवनत्रितये यस्य कीर्त्या पल्लवित विभो. ।
त नमामि **वि**रूपाक्ष गुरु वाक् काय-मानसै. ॥ २ ॥
विषमग्रथदुर्ग्रंथिविपाटनपुर सर ।
**वाम**ध्वजेन **सं**केत· क्रियते **कु**सुमाजलौ ॥ ३ ॥
भ्रातस्तर्क ! तवातिकर्कशतया मातर्मृदुत्वात् तव
त्राहि ! कापि न दृश्यतेत्र युवयोर्योगो जने यद्यपि ।
कारुण्येन तथापि मामकमुखाख्याब्जे मुहुः श्रीयता
येनाह **कु**सुमाजलेर्विवरण कुर्यामहार्यद्युति ॥ ४ ॥
यद्यप्यस्य विवेचितानि बहुशस्तत्त्वानि तज्ज्ञैर्जनै.
मद्ग्रथे ननु पिष्टपेषणमति· कार्या तथाप्यत्र न ।
रत्नानि त्रिदशैर्यदप्यवहितैर्निर्मथ्य पाथोनिधे-
राकृष्टानि तथापि जातु किमसौ रत्नैर्भवत्युज्झित· ? ॥ ५ ॥

First Colophon —

श्री**वामे**श्वरध्वजविरचिते **कु**सुमाजलिनिबधे प्रथमः परिच्छेदः समाप्तः ।

---

१ एकोनविंशपचाशकोपरि विंशतितममुपधानपचाशकमत्र विद्यते ।

मिथ्याज्ञानतमिस्रमुद्रितदृशः ससारदुःखाकुलान्
लोकान् दर्शयितु सुमार्गममिता न्यायागमैर्व्यजिता ।
श्री**वा**मध्वजनामधेयमुनिना विद्यावतामर्जिता
टीका(के)य **कु**सुमाजलेर्विरचिता चेतश्चमत्कारिणी ।। १ ।।
**वा**मध्वजेन रचिता जगता हिताय **न्या**यप्रबध**कु**सुमाजलिसज्ञकस्य ।
श्रीशैलराशिगुरुमन्युहिताय चारु टीका लिलेख परमाङ्गमनाः सुमैत्र्या ।।

End —

इति परमपाशुपताचार्यपडितश्री**वा**मेश्वरध्वजविरचिते **न्या**यकुसुमाजलिनिबधने पचम. परिच्छेदः ।

दोषेष्वेव गुणान् स्वय विरचिते ग्रथे गुणेष्वेव च
दोषानन्यकृते यदाप्यवहिता. शका. समारोपितुः ।
तन्मुक्त्वैव तथापि धूर्यैरचित. माहात्म्यमालब्य च
ग्रथोय गुण यैव सतत सद्भि समावर्ण्यता ।। १ ।।
पारपर्यवशाद् गुरोर्गुरुगुणग्रामै सहस्रादिभि·
वादात् स्वीयविचारतश्च सुधिया शश्वच्च स वदि(सवाद्)तः ।
निर्णीत **कु**सुमाजलेः किमपि यत् तत्त्व मया साप्रत
कार्यस्तत्र विपर्ययो न चतुरै वदि(वाचा) विचारोद्यतै. ।। २ ।।
यस्मिन् जल्पति वाग्वक्रिमवशाद् वक्रत्वमत्यद्भुत
बिभ्राणास्तदुपावि षडपि ते तर्का पुरो वादिना ।
तस्मात् तत्त्वमवेत्य तात्त्विकगुरो. श्रीम**द्वि**रूपाक्षत-
श्चक्रे वृत्तिमिमा समाहितमति**र्वा**मध्वजो धीरधीः ।। ३ ।।
शुभमस्तु सर्वजगतः etc सर्वत्र सुखी भवतु लोकः ।।

Colophon —

स्वस्ति परमभट्टारकपरमेश्वरपरमशैवसप्रक्रियोपेतमहाराजाधिराजमहासामताधिपतिः राज्ञा श्री**यु**वराजदेवसभुज्यमान**चौ**सानगरावस्थिते महामहोपाध्यायमिश्र**स्त**लेमाणेसुतउपाध्यायश्री**म**हादेवस्य पाठार्थं तीरभुक्तिस०कर्णकुलालकारठकुरश्री**मा**धवेन लिखितमिद यथा दृष्ट तथा लि

**१५८ कर्मविपाकवृत्ति** (स्वोपज्ञ) by **देवेन्द्र.** प *१८९, ९$\frac{3}{2}$"×१$\frac{3}{8}$"

* अत्र त्रुटितपत्राण्येतानि २८ , २९, ४९, ५०, ८६, ८७, १०७, १२७, १६५, १६८, १७०

१५९. (१) **योगशास्त्र** (१२ प्रकाश) प १–१००, १३३/७"×२"
(२) **वीतरागस्तव** ग्र १०४५ प १०१–११९*

Colophon —

सवत् १२२८ वर्षे श्रावणसुदि १ सोमे अद्येह श्रीमदणहिलपाटके समस्तराजावलीसमलकृतमहाराजाधिराजपरमार्हतश्रीकुमारपालदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि सामतमत्रिणि वलापद्रपथक परिपथ[य]तीत्येव काले प्रवर्तमाने श्रीप्राग्वाटवशोद्भवठ० कटुकराजतत्सुतठ० सोलाक तत्पत्नी राजुका ताभ्या पुत्रेण जगत्सिहनाम्ना सताणु द्रमायातेन प० थूलभद्रयोग्या पुस्तिका ॥

१६० **अनेकार्थसङ्ग्रह** by **हेमचन्द्र** ग्र १८२७ प ४९

१६१ (१) **योगशास्त्र** (४ प्रकाश) प १–३१, १४३/४"×२"
(२) **वीतरागस्तोत्र** प ३२–४५
(३) **बोधप्रदीप** (त्रुटित) प ४५–५२

Beginning —

चूडोत्तसितचारुचद्रकलिकाचचच्छिखाभास्वरो
लीलादग्धविलोलकामशलभ श्रेयोदशाग्रे स्फुरत् ।
तिमिरप्राग्भारमुच्छेदयेत्
चेत सद्मनि योगिना विजयते बोधप्रदीपो हरः ॥ १ ॥

End —

कि करिष्यत्यहो तेषा माया
येषा बोधप्रदीपेन मुक्तिमार्गः प्रदर्शितः ॥ ५० ॥
बोधप्रदीप समाप्त ।

(४) **आत्मानुशासन** प ५२–५७
(५) **मोक्षोपदेशपञ्चाशिका** by **मुनिचन्द्रसूरि** प ५७–६१
(६) **प्रशमरति** प ६१–८३
(७) **ज्ञानाङ्कुश** प ८४–८६†

Beginning —

महात्मना सत्त्ववशाद्यवस्थितिर्दृढा परिज्ञानसमाहितात्मना ।
परोपचारेषु तु माहगात्मनः समानयेत् कल्पनया नयाकुश ॥ १ ॥
यथा ममात्मा प्रियसपदुद्यतस्तथा परेषामथवा विशेषतः ।
अवाप्नुयुश्चेन्मदभिप्लवात् प्रिय न ते चरेयुः कथमात्मन. प्रिय ॥ २ ॥

---

* अन्तिममर्ध पत्र नास्ति । † पञ्चाशीतितम पत्र न दृश्यते ।

या शी(सी)तेव कलकचक्रविकल शील दधाना सती
जाता ख्यातिमती सतीति गुणिना चेतश्चमत्कारिणी ।
कृत्याकृत्यविवेककारिधिषणा धर्मैकचितामति
सज्जाया शितदेव्यभून्मतियुता सा वेल्लकस्य प्रिया ॥
चाहिणी वाजकस्याद्या पत्नी जाता द्वितीयका ।
शृंगारमतिराज्ञाया जिनेशस्य व्यवस्थिता ॥
वाजकश्चितयामास सारसवेगसय(ग)त ।
अन्यदा स्फटिकाकारे मानसे शुद्धधीर्यथा ॥
कल्पातप्रलयप्रवृत्तपवनव्यावृत्तदीपाकुरा-
कारा श्रीतिरनगसगिलल्नाभ्रूभगुरा सगमा ।
घर्मक्लातमृगेद्रवक्त्रकुहरव्यालोलजिह्वाचल
लावण्य लवलीदलास्यविलसद्बिंदूपम जीवित ॥
शरदभ्रसमा सर्वे पदार्था. सुखहेतव ।
सत्रासोद्भ्रातसारगीविलोचनचल बल ॥
माद्यत्कुजरकर्णतालति रति. प्रोच्चडसौदामिनी-
दामाडबरति प्रभुत्वमबलाचेत शरन्मेघति ।
लक्ष्मीः शक्रशरासनत्यनुकल सध्याभ्ररागत्यहो !
तारुण्य विषया वरा वरधुनीवेगति नृणा यतः ॥
तस्मात् ससारवल्लीवलयविर
क्षाभरभामलनमदकल. काललीलाविजेता ।
मोक्षस्त्रीसगदूतीसुगतिपथरथ· सपदाह्वानमत्रो
ध्वस्ताशेषव्यपायो निखिलसुखखनिर्धर्म एवात्र कार्यः ॥
प्रभवति स च धर्मो ज्ञानतस्तच्च शुद्ध
जिनवचनसरोजाज्जायते सौरभ वा ।
तदपि सततसेवाह्वासभावान्न का द्धिर्विरच्य ॥
ततश्च । कामोरुदावे विषयोरुतृष्णाच्छेदाय धन्यैः प्रतितन्यतेसौ ।
ससारसत्रे भविता जिनाज्ञा ज्ञानामृताभ.सरसी विलेख्य ॥
विशेषतो युक्त ज्ञानदान । यत –
समस्तधरणीतले प्रथितकीर्तिकल्लोलिनी
विनिर्गमकुलाचलो विमलकेवलालोक
... शक्राम्रतो वरा न चरणक्रिया विशदबोधयोग विना ।

मोहध्वातांशुमाली भववनगहनोत्सर्पिदावानलाभो
मानामानागशृगग्रहतिहरिर्योद्दामहेतीयमान.

३६६ (१) **पञ्चाशक** (मूल) प १–४४

(२) **पञ्चाशकवृत्ति** by **अभयदेव** प ४५–३६६

Colophon —

सवत् १४४२ वर्षे भाद्रपदसुदि २ सोमे लिखितमिद पुस्तक श्री**स्तंभतीर्थ**नगरे लिखित ॥ छ ॥ **आ**भूश्रेष्ठी ।

३६७ (१) **अनुयोगद्वार** (मूल) ग्र २००५ प १–४३, ३२½"×२"

(२) ,, **वृत्ति** by मलधारि**हेमचन्द्र** प ४४–२२३

Colophon —

ग्रथाग्र ५८८८ सवत् १४८० वर्षे कार्तिकवदि १२ रवौ मह **भी**मासुतहरिदासेन लिखित । शुभ भवतु । कल्याणमस्तु । मगलमस्तु । श्रीसघस्य भद्र भूयात् ।

Pras'astı of the Donor —

ॐ नमः सर्वविदे ।

पुरदरपुरस्फाति भाति श्री**पत्तन** पुर ।
धर्म्मन्यायमये यत्र नित्य लोक सुखायते ॥ १ ॥

विभाति गाभीर्यगुणेन नानाराजाप्तवृत्तिर्जडभावयुक्त ।
राजन्ननेकै पुरुषोत्तमै श्री**श्री**मालवशाबुनिधिर्नवीन ॥ २ ॥

तस्मिन् समग्रव्यवहारिरत्नमप्रत्नधामानुपमानकीर्ति ।
निर्दूषण सद्गुणधाम धर्ममयैककर्माजनि **क**र्मसिह ॥ ३ ॥

प्रियास्य **गो**ईत्यभिधा सुधासदृग्वच प्रपचा ममजायताद्भुता ।
विशुद्धशीलादिगुणैरनुत्तरैर्या **सी**तया स्व तुलयाबभूवुषी ॥ ४ ॥

तदगभूर्भूरिसमृद्धिधामा महेभ्यसीमाजनि **मा**लदेव ।
बुधा अबुध्यत भवाबुधौ य धनेश्वरस्य प्रतिबिबमेव ॥ ५ ॥

श्री**गूर्ज**रेश्वरनियोगिनि **रत्न**पाले
तद्ग्राहयत्यपि बलेन जन समग्र ।
नैकादशीव्रतमधा[त्यजद् ?] बहुधा प्रकारै-
स्तद्भापितोपि दृढदर्शनधी. सुधीर्य ॥ ६ ॥

अहो ! अनेकै सुकृतोन्मदैर्जन सदैकधर्मात्ममय नयन्नपि ।
अनतधर्मात्मकवस्तुदेशिनो **जि**नेशितु शासनमत्यजन्न य॰ ॥ ७ ॥

जगदन्तगता विमुक्तवद् ध्रुवमानत्यजुषोपि यद्गुणाः ।
ग्रहचक्रमिव स्थिरा अपि क्रममाणाश्च जगत्सु कौतुक ॥ ८ ॥
श्रीदेवसुंदरयुगोत्तमसेवयाप्तश्रीमज्जिनागमविचारमहारहस्यः ।
नंदीश्वरस्तवनमु[ग्ध]तरान् नवातीचाराश्च यो निरुपमानमतिश्चकार ॥ ९ ॥
षड्विधान्यहरह कुरुते स्मावश्यकानि कलिकालविजेता ।
यो यथोचितमथो धनदानो(नाद्) दीनलोकमुददीधरदेव ॥ १० ॥
श्रीतीर्थयात्रा–जिनबिंब–साधु–पूजा–प्रतिष्ठादिविधानधीर ।
सदापि साधर्मिकवत्सलत्व–दानादिधर्मैरजयत् कलि य ॥ ११ ॥
अथवा । सघभारधरणैकधुरीणा धर्मकर्मसु कदापि न रीणा ।
नित्य-देव गुरुभाक्तिकचित्ता क्षेत्रसप्तकनियोजितवित्ता ॥ १२ ॥
भूतलप्रथितकीर्तिसमूहाः पूरितार्थिजनसर्वसमीहा ।
भूरिभूतिपरिभूतधनेशास्तेजसावजितबालदिनेशा ॥ १३ ॥
मर्त्यलोकहितहेतुकमिंद्रप्रेषिता इव दिवः सुरवृक्षा ।
पच तस्य तनया विनयाढ्या भूरिभाग्यविभवा विजयते ॥ १४ ॥
आसीज्जनाह्लादकमूर्तिराद्य केल्हाभिधस्तेषु धिया निधान ।
प्रभावकालकरणस्य यस्य दशाप्यशोभत दिशो यशोभि ॥ १५ ॥
आस्ते जगत्ख्यातयशा द्वितीयो हीराभिधानो व्यवहारिहीरः ।
रमाबुधेर्यस्य गुणास्तरगा इवास्तसख्या जगती स्पृशति ॥ १६ ॥
सकलव्यवहारिवर्गमौलिर्वीराक सुकृती सुतस्तृतीयः ।
कलयत्यधुना प्रपन्नशीलः श्रेष्ठीदोरुपमा सुदर्शनस्य ॥ १७ ॥
भक्त श्रीगुरुपदयोः सदापि धर्माधारः श्रीजिनपतिशासनप्रभाकृत् ।
त्रैलोक्यप्रविततयशा विशा प्रधान पाताक समजनि तत्सुतश्चतुर्थः ॥ १८ ॥
सन्नदकः स्फुटविराजिसुदर्शनश्रीर्लक्ष्मीविलासवसति पुरुषोत्तमोत्र ।
तस्यागभूर्जयति पचमक क्षमाया गोविद इत्यभिधया विदितो गुणैश्च ॥ १९ ॥
यौवनेपि दधता किल शील येन धीरपुरुषाचरितेन ।
स्मारितः स्मररिपु परिभूय स्थूलभद्रमुनिवृत्तमिदानी ॥ २० ॥
केल्हाभिधानस्य जनी विनीता ख्यातास्ति हर्षूरिति यद्भुदुर्व्या ।
धर्मद्रुमः श्रीगुरु–देवभक्तिरसैः प्रवृद्ध फलतीप्सितौघैः ॥ २१ ॥
चतुरबुधिचारुकीर्तयोश्चतुराशाजनतामनोमता ।
तनुजा मनुजालिमडन चतुराः सति चतुर्मितास्तयोः ॥ २२ ॥

व्यवहारिवर्गमडनमखडदानादिधर्मविधिनिरता ।
डाहा भोला मंडन माणिक्येति क्रमाद् विदिताः ॥ २३ ॥
जगदद्भुतसौदर्ये भार्ये हीराभिधस्य जयतो द्वे ।
आद्या शाणीनाम्नी हीरादेवी द्वितीया च ॥ २४ ॥
भाग्य–दाक्ष्य–विनयादिगुणाढ्ये ते क्रमेण तनयावसुवाता ।
आदिमा विजयकर्णसकर्णं भूरिभूतिमपरा च गजाह्व ॥ २५ ॥
मायादिदोषरहिता दयिता विभाति वीराभिधस्य फलकूरनुकूलचित्ता ।
या यौवनेपि विमल प्रतिपद्य शील योषासु धैर्यविरहापयश प्रमार्ष्टि ॥ २६ ॥
सुतौ तयोर्भाग्यभृतौ विनीतौ प्रभूतभूती गुणभूरभूता ।
आद्य कृती नदति देवदत्तस्तथा द्वितीयो गुणदत्तनामा ॥ २७ ॥
पाताभिधानव्यवहारिमौलेरुभे अभूता दयिते विनीते ।
तत्रादिमा सच्चरितै पवित्रा पत्रापदेवी रतितुल्यरूपा ॥ २८ ॥
अपरा पदमलदेवी नित्य श्रीवीतरागभक्तिपरा ।
तनुजौ मनुजौ च वराविमे क्रमेणासुवाता द्वौ ॥ २९ ॥
श्रीजिनेद्रपदपकजभक्त सर्वदा सुकृतकर्मसु सक्त ।
आदिमो विजयते नगराज कीर्तिपूरसितशारदराज॰ ॥ ३० ॥
उदयराज इति प्रथितोपरस्सकलपौरविभूषणमगज ।
जयति देव–गुरूत्तमभक्तिभृन्नरमणी रमणीयगुणालय॰ ॥ ३१ ॥
गोविदनाम्नो दयितास्ति गगादेवी सदा श्रीगुरु–देवभक्ता ।
न जातु धर्मामृतशीतल यन्मन कलिस्तापयितु समर्थ ॥ ३२ ॥
तयोर्जयत्यब्धिमिता॰ सुता॰ श्रीपद् महाभाग्यभृतो विनीता॰ ।
भृताश्चतस्रोपि दिशो यशोभिर्येषामशेषा हिमरुग्महोभि॰ ॥ ३३ ॥
आद्यो हरिश्चद्र इति प्रतीत सूनुर्द्वितीय किल देवचद्र ।
ततस्तृतीयो जिनदासनामा प्ररूढनामा गुरु–देवभक्त ॥ ३४ ॥
अथ च । श्रीजैनशासनसमुद्धरणैकधीरा॰ श्रीदेवसुदरयुगप्रवरा विरेजु॰ ।
तेषा पदे जनमुदे विहितावतारा श्रीसोमसुदरगुरुप्रवरा जयति ॥ ३५ ॥
नि शेषलब्धिभवन भुवनातिशायि माहात्म्यधामभरतोत्तमसयमाद्या (ढ्या॰) ।
कि चात्र सर्वगुणसुदरशिल्पसीमाभूता जयत्यधिजिनेश्वरशासने ये ॥ ३६ ॥
चत्वार श्रीमदाचार्यास्तेषा शिष्या जयत्यमी ।
एकपादपि यैर्धर्मश्चतु पादभवत् कलौ ॥ ३७ ॥

**शां**तिस्तवेन जनमारिहृत **स**हस्रनामावधानिविरुदा महिमैकधाम ।
तेष्वादिमा विविधशास्त्रविधानधातृतुल्या जयति **मु**निसुदरसूरिराजाः ॥ ३८ ॥
षट्त्रिंशता सूरिगुणैरलङ्कृतास्तथा द्वितीया विजय वितन्वते ।
जगच्छु(त्स्तु)ता **कृ**ष्णसरस्वतीति सद्यश श्रिय श्री**ज**यचद्रसूरय ॥ ३९ ॥
व्यजयत **म**हाविद्याविडबनप्रभृतिशास्त्रविवृतिकृत ।
श्री**भु**वनसुदरगुरूत्तमास्तृतीया यशोनिधय ॥ ४० ॥
तुर्या जयति जगतीविदिता निखिलागपाठपारगता ।
श्री**जि**नसुदरगुरव॰ प्रज्ञावज्ञातसुरगुरव ॥ ४१ ॥
अ(इ)तश्च । गणाधिपश्रीगुरु**सोमसुंदर**प्रभूपदेश विनिशम्य सुदर ।
श्रुतस्य भक्तेरधुना **जि**नाधिपप्रवर्तमानागमलेखनेच्छया ॥ ४२ ॥
**गोविद–नगराजा**भ्या **नंदे**भ–**मनु**वत्सरे ।
लेखित पुस्तको जीयादाचद्रार्क प्रमोदद ॥ ४३ ॥
इति प्रशस्तिः । **अ**नुयोगद्वारवृत्ति॰ । व्य॰ **गो**इद–**न**गराजसत्क॰ ॥

**३६८ शान्तिनाथचरित्र** (प्रा) by **देवचन्द्रसूरि**
ग्र १२१०० त्रुटित प ३२१, ३३″×२″

Pras'astı of the Donor —

क्षोणीतलप्रसृतमूल उदीर्णशाखो धर्मैकहेतुरुरुपर्वपरपराभू ।
श्रीमाननेकगुणभृद्विहित प्रकुर्वन् **प्राग्वाट**वश उदितो विदितोस्ति भूमौ ॥ १ ॥
तद्वशलब्धप्रभव॰ पुरासीद् विनिर्गत **सत्य**पुरादुदीर्णात् ।
श्रेष्ठी विशिष्ट किल **सिं**हनागस्तस्याथ भार्याभवद**दु**पिनीति ॥ २ ॥
चत्वारोथ तयो पुत्रा जाता सर्वत्र विश्रुता॰ ।
**णाढ**को **वीर**डश्चान्यो **वर्ध**नो **द्रो**णकस्तथा ॥ ३ ॥
कनकरुचि पित्तलामय बिब यै कारित वर ।
यत् पूज्यतेधुनापि **द**धिपद्रे श्री**शां**तिजिनभुवने ॥ ४ ॥
**णाढ**कश्रेष्ठिनस्तत्र [ ] वदेवी प्रियाभवत् ।
त्रय॰ पुत्रास्तयोर्जाता॰ सद्गुणाढ्याः पटा इव ॥ ५ ॥
तत्राद्य **आम्र**दत्ताख्यो द्वितीय**श्चाम्र**वर्धन॰ ।
तृतीय॰ सज्जनानददायिमूर्तिश्च **सज्जन** ॥ ६ ॥
येनाकार्यत निर्मलोपल करशशाकप्रभ-
पार्श्वे(र्श्वे) **सु**पार्श्वतीर्थकरयोर्मूर्ति यशोवन्निज ।

प्राय पूरयदौपयाचितशतान्याराधकप्राणिना
श्रीमद्वीरजिनेश्वरस्य भवने मड्डाक्(हृ)ताख्ये(ख्ये) पुरे ॥ ७ ॥
पुत्र्यौ च पो(णा)ढकस्य द्वे आसिषाता महत्तरा (रे) ।
यश श्रीति गणिन्यन्या शिवादेवीति विश्रुता ॥ ८ ॥
महुलच्छि सज्जनस्याथ प्रियाभूत् पद्मिनीसमा ।
यया स्वपरि[मल]पद्माभातोषिता मार्गणा म(ल)या ॥ ९ ॥
विश्वप्रसिद्धा॰ कमनीयरूपा समीहिता सर्वजनस्य काम ।
तयो॰ सुता कामसुता इवोच्चै पचाभवन् किमु न साधुनिद्या ॥ १० ॥
तत्राद्यो धवलो नाम दी(वी)सलो देसलस्तथा ।
तुर्यो राहडनामा तु पचमो वाहडो मत. ॥ ११ ॥
धवलस्य सलूणीति प्रियासीद्थ चैतयो ।
वीरचद्र सुतो जातो देवचद्रस्तथा पर ॥ १२ ॥
विजयाजयराजापसरणमुख्यास्तत्र वीरचद्रसुता ।
जाता हि देवचद्रस्य देवराज सुत प्रवर ॥ १३ ॥
पुत्रिकैका सिरी जाता धवलस्य कलस्वरा ।
निरपत्यावभूता च पुत्रौ वीसल-देसलौ ॥ १४ ॥
राहडस्य लघुभ्राता वाहडोभूज्जनप्रिय ।
भार्या जिनमतिश्चास्य पुत्रो जसडुकस्तयोः ॥ १५ ॥
सज्जनस्य तथाभूता द्वे सुते तत्र शांतिका ।
माता शुकादिपुत्राणा द्वितीया धाविका पुन ॥ १६ ॥
अथ तत्र राहडो यो विशेषत सोभवद् गुणी प्राज्ञ. ।
सुजनप्रिय सुशील प्रियधर्मा सर्वदोदार ॥ १७ ॥
अपि च । सद्वप्रशाला(लो) भुवि नदनाद्य (ढ्य) ससौमनस्योनघषडरु ।
भव्यस्वभाव च दधदुन्नतात्मा सुवर्णभाग् राजति मेरुवद् य ॥१८॥
तथा । पूजा करोति विधिना स्तवन जिनाना साधून् स्तुते तदुदित समय शृणोति ।
दान ददाति च करोति तपोपि शक्त्या शील प्रपालयति गेहिजनोचित य १९
तस्य प्रिया देगतिनामधेया धर्मार्थिनी देव-मुनींद्रभक्ता ।
पात्रवितीर्णवित्ता नित्य समाराधितभर्तृचित्ता ॥ २० ॥
या नित्यश सहजभूषणभूषितागी लज्जानवद्यवसना शुचिशीलचर्या ।
जैनागमश्रवणभाक्सुवर्णालकारभृच्छुभवच.क्रमुकाढ्यवक्त्रा ॥ २१ ॥

चत्वारस्तनया बभूवुरनयो सपन्नकोशान्वया
धर्माभ्यासपरा क्षमाभरधरा प्राप्तप्रतिष्ठा कलौ ।
सत्यागा गुरुविक्रमा सुयशस सच्छकसारा प्रजा
पूज्या सद्विनया सुनीतिसदन सतो नरेंद्रा इव ॥ २२ ॥
तत्राद्यश्चाहडो नाम **बो**हडिस्तु द्वितीयक ।
**आ**सडाख्यस्तृतीयश्च तुर्यो **आ**सुधरस्तथा ॥ २३ ॥
पापारिप्रहतिसहा सुबाणयुक्ता' सद्वशसजाता ।
अन्यारूढगुणा ये धनुर्लता इव विराजते ॥ २४ ॥
**रा**हडश्रेष्ठिनस्तत्र जाता वध्व इमा वरा ।
**अ**श्वदेवी **व**सुधी च **च**माइ–**ते**जय–**रा**जुका. ॥ २५ ॥
तथा । **य**शोवर–**य**शोवीर–**य**शोकर्णादयोभवन् ।
पौत्री पुत्रश्च **ये**ऊ य **जा**सुकाद्या जयतु का ॥ २६ ॥
एव कुटुबयुक्तस्य **रा**हडश्रावकस्य तस्याथ ।
**बो**हडिनामा पुत्र' पचत्वमुपागत सहसा ॥ २७ ॥
अथ तद्वियोगविधुर स **रा**हडश्रावक स्म चितयति ।
हा ! धिक् ससारस्वरूपमतिनिदित विदुषा ॥ २८ ॥
तथाहि–जीवित यौवन सद्वपु सारसीमतिनी सगमा' सज्जना ।
सर्वमित्यादिक वस्तुजात महामेघमध्यस्थविद्युल्लताचचल ॥ २९ ॥
अतो मनुष्येण विधेय एव चतु प्रकारोपि **जि**नेंद्रधर्म' ।
उशति तत्रापि च सुप्रशस्य सज्ज्ञानदान मुनिकुजरेंद्रा' ॥ ३० ॥
अतोह ज्ञानदान तत् करोमीति विचित्य स ।
**चरितं** लेखयामास **शांते**र्बिंब च कारित ॥ ३१ ॥
स्वभुजोपात्तवित्तेन पूर्व सत्पित्तलामय ।
गृहपूजोचित स्फार पुण्योपार्जनहेतवे ॥ ३२ ॥
नृपतिगृहमिवोच्चैश्चचदत सुवर्ण निहितरुचिरचित्र चारुपत्रेण शोभि ।
स्फु अगीकृतप(ब)हु जमोद पुस्तक तच्चकास्ति ॥ ३३ ॥
सवत्सरे **नग-भुजार्क**मिते नभस्ये मासे पुरे**णहिलपाटक**नामधेये ।
**सुश्रावके कुमरपालनृपे** च राज्य कुर्वत्यलिख्यत सुपुस्तकमेतदग्र ! ॥ ३४ ॥
श्रीमत्**प**रमानदाचार्येभ्य श्रीधरा प्रभाचा ।
शिष्येभ्य. ॥ ३५ ॥

यावन्नभ श्री जननीव तोष पयोधरक्षीरमथ प्रजाता ।
तनोति तारा-भ रवी सुपुष्यदन्नाशु तावद् भुवि पुस्तकोय ॥ ३६ ॥
श्री**चक्रेश्वरसूरेः** श्री**परमाणंदसूरि**भि शिष्यै ।
विहिता प्रशस्तिरेषा पद्मते(?) पुस्तकस्यास्य ॥ ३७ ॥

मगल महाश्री ।

३६९ **संमतितर्कटीका** (उत्तरार्ध) by **अभयदेव**

प ३३५, $३३\frac{१}{२}''×१\frac{३}{४}''$

Beginning —

अथ कथ प्रत्यभिज्ञा प्रमाणमनुभवति ?

Colophon —

सवत् १४४६ वर्षे फागुणसुदि १४ सोमे भट्टारकश्री**सोमतिलकसूरीणां भंडारे** मह **ठाकुरसीहे**नालेखि ।

**प्राग्वाट**ज्ञातीयसा० **षो**षासुतसा० **मह्**णाभार्यास० **गो**नीपुत्र्या विहितयात्रादिबहुपुण्यकृत्यस० **हरिचद**पितृसा० **पारस**भागिनेय्या **वील्हू**श्राविकया भट्टारकश्री**देवसुदरगुरू**णामुपदेशेन **अभयचूला**प्रवर्तिनीपदस्थापना–श्रीतीर्थयात्राद्यर्थं समागतस० **हरिचदे**न सह प्राप्तया श्री**स्तभतीर्थे** सवत् १४७७ वर्षे **समति**पुस्तक लेखितमिति । भद्र श्रीसघाय ॥

३७० **त्रिषष्टिश पु चरित**( पर्व ३–७,९ ) by **हेमचन्द्र**

प ३८०, $३२''×२\frac{१}{२}''$

Colophon —

मह्श्री**अभयसिंह**स्य । × ×

सूर्याचद्रमसौ यावदुदयेते नभोगणे ।
पठ्यमानो बुधैस्तावन्नदताद्देष पुस्तकः ॥ मगल महाश्री ॥

३७१ **पउमचरिय** ( पद्मचरित्र ) प २५६, $३६\frac{१}{२}''×२''$

Colophon —

इति **पद्म**चरित्र समाप्तमिति । ग्रथाग्र १०५००

सवत् १४५८ वर्षे प्रथमभाद्रपद्सुदि ८ अष्टम्या रवौ श्री**पत्तने पद्म**चरित्र लिखित । श्रीशिवमस्तु । श्री ।

Praśasti of the Donor —

**प्राग्वाट**ज्ञातीय श्रेष्ठी **वीरा**भिध· सुकृतनिष्ठ· ।
कीर्तिप्रथाप्रथिष्ठ. शिष्टप्रष्ठोजनि गरिष्ठ. ॥ १ ॥

प्रभूतपुण्यार्जनसावधानस्तस्यांगजोभूद् व्ययजाभिधानः ।
गुणैरनेकैरिह नि समान परोपकारप्रध(थ)नैकतान ॥ २ ॥

**माऊ**सञ्ज्ञा तस्य भार्या विधिज्ञा जज्ञे धन्यागण्यपुण्यप्रवीणा ।
कीर्तिस्फीता सर्वदोदारचित्ता रेखाप्राप्ता स्त्रीषु शीलोत्तमा च ॥ ३ ॥

चत्वार एते तनयास्तदीया जाता धनाढ्या सुकृतावदाता ।
**ते**जाभिधो भद्रक**भीम**सिंह स **पूर्ण**सिंहो भुवि **पद्म**सिंह॰ ॥ ४ ॥

सुता तथा **रूपल**नामधेया गुणैरमेया शुभभागधेया ।
यस्या॰ पितृव्या त(स्त)नुमात्रकेण श्रीम**ज्जयानंद**मुनींद्रचंद्रा॰ ॥ ५ ॥

आबालकालादपि पुण्यभरैकताना करुणार्द्रचित्ता ।
देवे गुरौ भक्तिमती सतीद्धा सदा तप कर्मणि कर्मठा या ॥ ६ ॥

श्रीम**त्त**पागणनभोगणभानुकल्पश्री**देवसुंदर**गुरुप्रवरोपदेशात् ।
**नंदेषु–वारिधि–शशांक**[१४५९]मिते प्रतीते संवत्सरे वहति **वि**क्रमभूपतीये ७

श्रीमत्**पद्मचरित्र** बहुना द्रविणेन लेखयित्वेद ।
श्री**पत्तनीयकोशे** निवेशयामास सा सिद्ध्यै ॥ ८ ॥

मोक्षाध्वनीनसाधूनां ज्ञानसत्रोपम पर ।
आचंद्रार्कमिद जीयात् पुस्तक प्रास्तदूषण ॥ ९ ॥ श्री श्री॰ ।

**३७२ (१) ज्ञातासूत्र** प १–१४४, ३२′×२″

(२) ,, **वृत्ति** by **अभयदेव** प १–१२३

Pras'asti of the Donor —

अखडैर्य **खंडैर्नव**भिरभित॰ पिंडितवपु
सुधाकुंडे कुंभीनससहकृतैर्मंडित इव ।
सुरै सेव्य सर्वैरविजितजरा–मृत्युचकितै
प्रभु स श्री**पार्श्वो** जयति नितमा यत्र सतत ॥ १ ॥

उद्दाम**म्ले**च्छकोटिप्रसृमरसमरत्रस्तवृंदारकाणा
विश्रामस्थानता यत् प्रतिपदमगमत् पुण्यलोकैरशोकै॰ ।
चंचद्गंगातरंगोज्ज्वलबहलगुणैर्धाम धर्मश्रिया यत्
श्रीमद् **घोघा**भिधान सुललितनगर स्वस्तिमन्नित्यमस्ति ॥ २ ॥

तस्मिन् रमाया सदने दवीयोदेशस्थवस्तुपभुभि प्रपूर्णे ।
वेलाकुले भूमितलप्रसिद्धे घोघाभिधाने नगरे समृद्धे ॥ ३ ॥
त्रिभिर्विशेषक ॥

वेधा वीक्ष्य कलिप्रचडभुजगग्रस्त समस्त जगत्
तत्राणाय ससर्ज तर्जनपरा या दुर्जनाना तत ।
ज्ञाति पूर्णमृगाककातिविशदा श्रीमालसज्ञामिह
शश्वद्धाम–विवेकवासभवन विज्ञानवारानिधि ॥ ४ ॥

तस्या ज्ञातौ बृहत्यामतिमतिविभवापास्तवाचस्पति श्री-
क्रीडागार गरीयोनरवरनिवहैर्माननीय सदापि ।
मत्री मत्रप्रबलबलवान् धुर्यधैर्यादिवर्य
मांडाह्वान समजनि जनतासेवनीयोऽवनौ वै ॥ ५ ॥

श्रीयादेवीति तस्यासीद् भार्या भूरिगुणैकभू ।
या मान–दान–शीलादिपुण्यैर्जज्ञे प्रसिद्धिभाक् ॥ ६ ॥

तयो सुतावजायेता विख्यातौ क्षोणिमडले ।
सरवण–धीधाह्वानो प्रधानौ व्यवहारिषु ॥ ७ ॥

आद्य सर्वणनामत सुविदितो देवालयै सुदरा
सत्साधर्मिकलोकलक्षबहुला गुर्वादिभिर्भासुरा ।
श्रीशत्रुजय–रैवतादिषु महातीर्थेषु यात्रा सृजन्
श्रीसघाधिपते पद निजकुले विस्तारयामासिवान् ॥ ८ ॥

पादलिप्तपुरेऽपूर्वललताह्वसरोवरे ।
उद्धार यश्चकारोरुद्रविणव्ययपूर्वक (क) ॥ ९ ॥

ससारदेवी स्थवि ।
लादिवरेण्यपुण्यै फलेग्रहि स्वीयजनु ससर्ज ॥ १० ॥

द्वितीयोऽद्वैतभाग्याभिराम श्रीमान् धीमान् धींधनामाजनिष्ट ।
यो दुष्काले भूरिलोकानशोकान् सत्रागारे भोजयित्वा वितेने ॥ ११ ॥

पादलिप्तपुरे पद्मप्रासाद य समुद्दधौ ।
अन्यान्यपि बहून्येष धर्म[स्था]नानि चाकरोत् ॥ १२ ॥

सरवणसघाधिपतेस्तनयो विनयोज्ज्वलो गुणविशाल ।
देवानादि नाम श्री(? सघा)धिपतिर्जयति प्रशममति ॥ १३ ॥

सद्भाग्य–सौभाग्य–कला–सुशीला दानादिपुण्येषु च धीधुरीणा ।
अस्यास्ति जाया रमा परा धि(पि)मलदेवीनाम्नी ॥ १४ ॥

अनयो सुतस्समथ(ध)रो द्वितायो को हि मयर ।
ई हस्तिनाम्नि च गोरी गुणैरासन् ॥ १५ ॥

इतश्च । श्रीमत्तपागणनभोगणभासनाक्षी(?)जाग्र [यु]गोत्तमगुणावलयो जयति ।
श्रीदेवसुंदरगुरूत्तमनामधेया सूरीश्वरा निरुपम[ ]नामधेया ॥ १६ ॥
तेषा निरतर सम्यक् निशम्य वचनामृत ।
[सद्]यो विक्रमादित्य प्रबुद्धहृदयाबुज ॥ १७ ॥
[ण्का]दशांगीवरसूत्र-वृत्ती लिलेखयन् लेख्यतुल्यलक्षा (?) ।
अलीलिख मिमिमा सपु(प)त्रा वस्तागराह्वी (?) अयनव्ययेन ॥ १८ ॥
श्रीदेवसुदराचार्यसतानजव्रतीश्वरै(रे) ।
वाच्यमान. सदा जीयात् पुस्तक स्रस्तकल्मष ॥ १९ ॥

**३७३ कुसुममालावृत्ति** by **म हेमचन्द्र** प ३८४, ३१"×२½"

Colophon —

ग्रथाग्र १३८६८ सवत् १३१३ वर्षे आश्विनसुदि १० शनौ **कुसुममाला**पुस्तक समर्थित । छ

Pras'asti of the Donor —

॥ ६० । येन विश्वजयी जिग्ये लीलया विषमायुध ।
स **वीर** श्रेयसे भूयाद् भवता भववारण ॥ १ ॥
यो लक्ष्मीललनाविलासवसतिर्गाभीर्यसत्वाश्रयो
मर्यादासमलकृत प्रतिदिन यो वल्लभाना पद ।
चित्र यज्जडसगतो न हि सदा वैरस्य दाहप्रद
सोय **गूर्ज्जर**सज्ञको विजयते **वशो**ऽतिसिधुर्भुवि ॥ २ ॥
तस्मिन् वशे विशदयशसा प्रोतनिश्वान्तराल
सद्भिर्मान्य·

**३७४ धर्मसङ्ग्रहणीवृत्ति** (अपूर्ण) प १-२५०, ३४"×२"

Beginning —

यथास्थिताशेषपदार्थसार्थप्रकाशन शासनमद्वितीय ।
कुतर्कसपर्कविमूढचित्तप्रवाद्यधृष्य जयता**ज्जिना**ना ॥ १ ॥
ज्योतिर्ध्वस्ततमस्काड प्रकाड वस्तुदेशिना ।
बृहस्पत्यादिखद्योतोद्योतमार्तडमडल ॥ २ ॥
श्री**वर्धमान**मानम्य प्रमाण तत्त्वनिर्णये ।
**धर्मसङ्ग्रहण्यष्टीका**महमाधातुमुत्सहे ॥ ३ ॥

Colophon —

सवत् १४४९ There are ten verses of Pras'asti, but they are damaged

धर्मसग्रहणीवृत्तिर्यं वर्मामृतप्रपा ।
स्व–परातरगतृष्णोपशमार्थमलेख्यत ॥ १० ॥
पत्तने पुस्तक लिखित ।

३७५ (१) **ज्ञाताधर्मकथा** (मूल) प ११९, ३५"×२¼"
(२) ,, **वृत्ति** by **अभयदेव** प १–१००

Colophon —

ग्रथाग्र ९८३० सवत् १३८६ अश्विनवदि ४ सोमे लिखितमिद पुस्तक मगल महाश्री ॥

३७६ (१) **जम्बूद्वीपप्रज्ञप्ति** (मूल) प १–९९, ३२"×२'

Colophon —

जंबुद्दीवप्रज्ञप्ति समाप्ता । शुभ भवतु ।
सवत् १४७८ वर्षे श्रावणसुदि ५ रवौ लिखित श्रीमदणहिल्लपत्तने ।

(२) **जम्बूद्वीपचूर्णि** प १–४४

Colophon —

जबुद्दीवकरणाण **चुण्णी** सम्मत्ता । सवत् १४७९ मार्ग व ११

(३) **सूर्यप्रज्ञप्ति** ग्र २२०० प १–५०
(४) ,, **टीका** by **मलयगिरि** प १–२३७

Colophon —

सवत १४८१ वर्षे वैशाखशुदि ८ बुवे लिखित श्रीमदणहिल्लपत्तने । शिवमस्तु ॥

३७७ **आवश्यकनिर्युक्तिवृत्ति** (त्रुटित जीर्ण) प २५०, ३१½"×२"

Beginning —

मदशक्तिरपि ।
आवश्यकनिर्युक्ति **विवृणोमि** यथागम स्पष्ट ॥

३७८ (१) **नन्दीसूत्र** (मूल) ग्र ७०० प १–१५, ३१½'×२"
(२) ,, **टीका** by **मलयगिरि** ग्र ७७३२ प १६–२२६

Pras'asti same as No 367 "**अनुयोगद्वारवृत्ति**"

३७९ (१) **कल्पचूर्णि** (अपूर्ण त्रुटित) प २–८१, ३२"×२½"
(२) **बृहत्कल्पभाष्य** ग्र ६६००, प २१–२०८

३८० **सुपार्श्वनाथचरित्र** (प्रा०) by **लक्ष्मणगणि**
प २७५, ३२½"×२½"

**३८१ धर्मसङ्ग्रहणीटीका** by **मलयगिरि** प ३३९, ३१″×२′

Colophon —

सवत् १४३७ वर्षे अश्विनवदि प्रतिपदतिथौ शनिवारे **धर्मसग्रहणी** नाम ग्रथस्य पुस्तक लिखापितमस्ति ।

Pras'asti of the Donor —

जैनत्वाव्यभिचारिभावसुभगा सर्वेपि यस्मिञ्जना-
स्तस्मिन् धर्म-यश समृद्धिविशदे वशे(**शो**)पकेशाह्वये ।
श्राद्धो **भून्नर**सिह इत्यभिधया साधु प्रसिद्ध सुधी-
स्तस्य प्रौढगुणा बभूव **न**यणादेवीति वित्ताप्रिया ॥ १ ॥
तयोरभूवस्तनयास्त्रयोमी **मू**जाल–**मा**ला–**म**हिपालसज्ञा ।
**मा**लाभिधस्तेषु विशेषधर्मा खर्वीकृतद्रोहकमोहगर्व ॥ २ ॥
पुण्याय पाणिग्रहे(हणे) निषेधी धीर सुशीलोत्तमगेहमेधी ।
**जि**नेश्वरार्चादिविशिष्टनित्यानुष्ठाननिष्ठ सुकृतालिपुष्ट ॥ ३ ॥
साक्षात् तीर्थमिलातले सुविपुले **चां**द्रे कुले श्री**त**पा-
गच्छे व्योमविभूषण वितमसस्तेजस्विनोर्केंदुवत् ।
श्रीगच्छाधिपपूज्यसद्गुरु**ज**यानदाह्वया सूरय
श्रीमतो **गुरुदेवसुदर** इति ख्याताश्च सूरीश्वरा ॥ ४ ॥
तेषा गुरूणामुपदेशयोगाद् दान सदानदरसानिदान ।
विज्ञाय विज्ञो वपते[स्म] सप्तक्षेत्र्या नयोपार्जितमात्मवित्त ॥ ५ ॥
शास्त्रलेखनमिहापि हि सार ज्ञानसत्रसदृश यत एतत ।
इत्यवेत्य विशदाशयवृत्ति**र्धर्मसग्रहणिवृत्ति**मिमा च ॥ ६ ॥
साधु**मल्ल** इह लेखयति स्म **स्तं**भतीर्थनगरे गरिमाढ्ये ।
**भूधराग्नि–जलधींदु**मिताके वत्सरेश्वयुजि निर्मलपक्षे ॥ ७ ॥
सुराद्रिदडस्थितिमिद्धतारामुक्तावलीक वियदातपत्र ।
श्रीसघराजोपरि यावदास्ते सत्पुस्तक नदतु तावदेतत् ॥ ८ ॥

**३८२ पुष्पमालावृत्ति** (त्रुटित) by **म हेमचन्द्र**
प १–३११, ३१″×२″

**३८३ (१) जीवाभिगमसूत्र** ग्र ४७०० प १–१२३

Colophon —

मगल महाश्रीः । शुभ भवतु । छ । सवत् १४४४ वर्षे अश्विन वदि ८ बुधे ।

(२) **जीवाभिगमवृत्ति** by **मलयगिरि**
(upto सप्तविधप्रतिपत्ति in fol 351) प १२४-३७१, ३३½"×२"

३८४ (१) **व्यवहारभाष्य** प १-१२७
(२) ,, **वृत्ति** (अपूर्ण) प १-२७१, ३०"×२"

Colophon —

सवत् १४७० वर्षे चैत्र वदि ३ तृतीयातिथौ वार रवि पुस्तक लिखित समाप्त। सूत्र वृत्ति सर्वग्रथ सहस्र एकत्र सूत्राक ।

**३८५. उत्तराध्ययनलघुवृत्ति** (सुखबोधा अपूर्ण) by **देवेन्द्र.**
प ३५०, ३०"×२½"

Beginning —

प्रणम्य विघ्नसघातघातिनस्तीर्थनायकान् ।
सिद्धाश्च सर्वसाधूश्च स्तुत्वा च श्रुतदेवताम् ॥
आत्मस्मृतये वक्ष्ये जडमति-सक्षेपरुचिहितार्थं च ।
एकैकार्थनिबद्धा **वृत्ति** सूत्रस्य **सुखबोधा** ॥
बह्वर्थाद् **वृद्धकृताद्** गभीराद् **विवरणात्** समुद्धृत्य ।
**अध्ययनानामुत्तर**पूर्वाणामेकपाठगता ॥
अर्थांतराणि पाठातराणि सूत्रे च **वृद्धटीकात** ।
बोद्धव्यानि यतोय प्रारभो गमनिकामात्र ॥

**३८६. उत्तराध्ययन** (निर्युक्ति-चूर्णि-वृत्तिसहित प्रथमखण्ड)
प ३०२, ३४"×२"

**३८७.** (१) **उत्तराध्ययन** (सूत्र) ग्र २०५६ प १-४७ ले स. १४००
(२) ,, **वृत्ति** (सुखबोधा) by **देवेन्द्र**
ग्र १२००० प २७६, ३५"×२½"

Pras'asti of the Donor —

नम॰ सर्वज्ञाय ।

सन्मर्यादो गभीरो घनरसनिचितः साधुपाठीनहेतु-
र्नित्य लक्ष्म्या निवास॰ कुलधरनिलयः सद्वसुस्थानमुच्चैः ।
कुल्याधारो गरीयान् प्रचुरतरलसत्कोटिपात्रोपशोभी
वशः **प्राग्**वाटपुसा क्षितितलविदितो वर्तते सिधुकल्प॰ ॥ १ ॥
तत्राभवद् देवगजोपमान. सलीलगामी बहुदानवर्षः ।
यो नामतः ख्यातिमितोऽर्थतश्च जने भृश **शो**भित इत्युदात्तः ॥ २ ॥

पारिग्रहिकता प्राप्त· स्थाने **धा**न्येरकाह्वये ।
प्रजासु राजवर्गे च मान्यो मन्युविवर्जित· ॥ ३ ॥
सुदती दतिनीवाभूद् भार्या तस्येह **रु**क्मणी ।
सलीलगमना काम सुवशोन्नतिशालिनी ॥ ४ ॥
जातास्तयोस्ततनयात(स्त)नया विनयान्विता· ।
जनितानेकलोकार्था पुरुषार्था इव त्रय ॥ ५ ॥
तत्राद्यो **वी**रचद्राख्यो विख्यातो निर्मलैर्गुणै· ।
तगुरु–देवासेवी **वी**रदेवाभिधोपर ॥ ६ ॥
तृतीय **पू**र्णपाल· श्रीश्रेयसा भाजन पर ।
यथाक्रममथामीषा भार्या सच्चर्ययान्विताः ।
**रा**जिनीप्रमुखा सख्य यासा साध्वीभिरायत ॥ ७ ॥
पचाथ पुत्रिका जाताः सुपवित्राश्च ।
पित्रोर्विनयकारिण्यो वरेण्यगुणराजिता· ॥ ८ ॥
तत्रादिमा बाधवलोकमान्या पैशुन्यशून्या दितमत्यु(न्यु)दैन्या ।
नाम्ना प्रतीता **स**रणीति धन्या यशोवता(दा)ता सुतरा वदान्या ॥ ९ ॥
प्रियवाक्यप्रयोगेन प्रीणिताखिलदेहिन· ।
**पा**सडवणिज पत्नी श्रावकस्य विवेकिन· ॥ १० ॥
द्वितीया **म**रुदेवीति गणिनी गुणशालिनी ।
ज्ञान–दर्शन–चारित्र[गुणत्र]यविभूषिता ॥ ११ ॥
तृतीया श्रितसतोषा **स**तोषेति सुविश्रुता ।
**य**शोमतीरिति ख्याता तुर्या बहुयशोमति· ॥ १२ ॥
**वि**नयश्रीरिति ख्याता गणिनी पचमी जने ।
**म**रुदेवीगणिन्यास्तु सदातेवासिनी परा ॥ १३ ॥
यन्नैर्मल्य निभाल्येवानन्यतुल्य निशाकर ।
लज्जितोकस्थलेनातः कालुष्य बिभ्रते भृश ॥ १४ ॥
अथान्यदा वाचमुवाच कर्ण्ण्सुश्र (?) सरणी गुरूणा ।
यथा महार्था **जि**नभाषिता गीराराध्यमाना विनिहति मोह ॥ १५ ॥
निशम्य चैव सजातबुद्धिर्जिनवरागम ।
लेखयितु सुत प्रष्ठा **वि**मलचद्रनामक ॥ १६ ॥
द्वितीय **दे**वचद्र च धर्मसबद्धचेतस ।
तृतीय च **य**शश्चद्र सुकृतन्यकृताहस ॥ १७ ॥

तैरेव कृतसाहाय्या धनदानेन भूयसा ।
भगिनीभिश्च **स**तोषाप्रमुखाभि· सुखेच्छया ॥ १८ ॥
पुस्तकमेतदलीलिखदि**होत्तराध्ययन**सत्क**टीका**या ।
प्राजलपक्तिविशिष्ट विविक्तरेखाक्षर**सोमं** ॥ १९ ॥
सूर्याचद्रमसौ यावद् यावद् दीप· सासिधव ।
पठ्यमानो बुधैस्तावन्नदत्वेष सुपुस्तकः ॥ २० ॥

**३८८. उपदेशमालावृत्ति** ( कर्णिका ) by **उदयप्रभ**

त्रुटिता प २५७, ३३½"×२½"

Beginning —

**अर्हं । अर्ह**स्तनोतु भुवनाद्भुतकल्पवृक्ष श्रेय.फल निविडबोधसुमप्रसूत ।
यस्याङ्घ्रिमूलमभितः पतितप्रसूनप्राया· सुरासुरनगाधिपसपदोपि ॥ १ ॥
देवः स वः शतमुखप्रमुखामरौघक्लृप्तप्रथ प्रथमतीर्थपति. पुनातु ।
मुक्तिक्रमो न ॥ २ ॥

यस्य कल्पतरव· सर्वेप्युपादानता ।
नेत्थ चेत् कथमन्यथा वसुमतीमस्मिन्नलकुर्वति
त्रैलोक्यैकगुरौ न गोचरममी जग्मुर्जगच्चक्षुषा ॥ ३ ॥
तुगेभभीममसितीव्रतरेण कर्म्मव्रात व्रतेन विनिपात्य भवाटवीषु ।
मुक्तावलिश्रियमशिश्रियदात्म . ॥ ४ ॥

. . .

त्तसेन हसेन या ।
किजल्कग्रसनप्रसक्तमन[स]स्तस्यैव हेतो करे
कुर्वाणा कमल सता भवतु सा **ब्रा**ह्मी परब्रह्मणे ॥ ५ ॥
जीयाद् **विजयसेन**स्य प्रभो प्रातिभदर्प्पण· ।
प्रतिबिबितमात्मान यत्र पश्यति भारती ॥ ६ ॥
सघस्याद्भुतपुण्यपण्यविपणौ सा मा . . . . ।
. .. पदेशपद्धतिरसौ सा प्रातराशायते ॥ ७ ॥
गाथास्ता खलु **धर्मदासगणिन** सज्जातरूपश्रिय·
कि चैष स्फुरदर्थरत्ननिकर· **सिद्धर्षि**णैवार्पित· ।
तेनैतामतिवृत्तसस्कृतमयीमातन्वत· **कर्णिकां**
**वृत्ति** मेत्र सुवर्णकारपदवीसीमाश्रमश्लिष्यता ॥ ८ ॥

यत॰ . . . .... ।

यथाविधिस्तबकघटनादुज्जृभते यशांसि तु शिल्पिन. ॥ ९ ॥

End —

कलश(मठ)घनभृताभोराशिसवासिसर्प्पा-

धिपतिकलितमूर्त्तिर्नीलनालीककाति. ।

सितरुचि–रविराजल्लोचन. केवलश्री-

परिचयचतुरात्मा श्रीजिनो व. श्रियेस्तु ॥ १ ॥

श्रीवर्धमान शमिना मनासि जिनो धिनोतु त्रिपदी यदीया ।

व्याप्नोति विश्व बलिघातकर्म्मजयोदिता विश्वमनश्वरश्री ॥ २ ॥

श्रीवीरशासनमहामहिमा गरिष्ठ श्रीभद्रबाहुविहिताचरणप्रतिष्ठः ।

काले कलावपि लुप्तघनाघसघ श्रीमानय विजयते यतिमूलसघः ॥ ३ ॥

श्रीनागेंद्रकुले मुनींद्रसवितु श्रीमन्महेंद्रप्रभोः

पट्टे पारगतागमोपनिषदा पारगमग्रामणी॰ ।

देव॰ सयमदैवत निरवधिस्त्रैविद्यवागीश्वर

सजज्ञे कलिकल्मषैरकलुषः श्रीशांतिसूरिर्गुरु॰ ॥ ४ ॥

शक्तिः कापि न कापिलस्य न नये नैयायिको नायक-

श्चार्वाकः परिपाकमुज्झितमतिर्बौद्धश्च नौद्धत्यभाक् ।

स्याद् वैशेषिकशेमुषी च विमुखी वादाय वेदांतिके

दांति. केवलमस्य वक्रुरयते सीमा न मीमासकः ॥ ५ ॥

तत्पट्टे प्रथमः शमिप्रभुरभूद्आनदसूरि पर

सजज्ञेऽमरचद्रसूरिरखिलानूचानचूडामणि. ।

शश्वद् यस्य सरस्वतीप्रसरणे सिद्धेशितु ससदि

प्राज्ञैश्चेतसि वेतसीतरुरसावाचार्यक कार्यते ॥ ६ ॥

सिद्धातोपनिषन्निषण्णहृदयो धीजन्मभूस्तत्पदे

पूज्य॰ श्रीहरिभद्रसूरिरभवच्चारित्रिणामग्रणी ।

आत्वा शून्यमनाश्रयैरतिचिराद् यस्मिन्नवस्थानतः

सतुष्टै कलिकालगौतम इति ख्यातिर्वितेने गुणै ॥ ७ ॥

गुरु. श्रीहरिभद्रोय लेभेधिकवय.स्थितिं ।

मोहद्रोहाय चारित्रनृपनासीरवीरता ॥ ८ ॥

तत्पट्टे विजयसेनसूरयः पूरयति कृतिना मनोरथान् ।

तद्गवी वृषमसूत नूतना कामधेनुरिव सर्वकामद ॥ ९ ॥

गर्वात् पूर्वमनादरैरवहितैः पश्चात् ततो विस्मितै॰
प्रस्विन्नैरनु विस्मृतात्मभिरथो वादेनुवादे क्षणात् ।
भाग्यैर्मानिमनीषिणा परिणता पुस्त्वेन वागेष इ-
त्याक्षिप्तैरथ सेव्यतेथ सहसा य सादर वादिभिः ॥ १० ॥

यस्योपदेशममृतोपमित निपीय श्री**वस्तुपाल**सचिवेश्वर-**तेजपालौ** ।
सघाति(धि)पत्यमसम **जिन**तीर्थतेज सवर्धनाञ्जितशतक्रतुस्तौ (?) ॥ ११ ॥

श्रीमद्**विजयसेन**स्य सौमनस्य नमस्यत ।
यद्वासिता धृता केर्न गुणा शिष्या सु(श्र ? स्व)मूर्धसु ? ॥ १२ ॥

शिष्यस्तस्य च लक्षणक्षणचण॰ साहित्यसौहित्यवा-
नुद्यत्तर्कवितर्ककर्कशमति सिद्धातशुद्धातुरः ।
श्री**धर्माभ्युदये कविः** प्रविलसद्दुर्वादिगोत्रे पवि-
स्तामेता**मुदयप्रभा**ख्यगणभृद् **वृत्ति** व्यधात् **कर्णिकां** ॥ १३ ॥

तस्याज्ञया **विजयसेन**मुनीश्वरस्य
शिष्येण सेय**मुदयप्रभदेव**नाम्ना ।
योग्या विशेषविदुषा**मुपदेशमाला-**
**वृत्तिः** कथाग्रथनतोभिनवा वितेने ॥ १४ ॥

प्रथमादर्शे प्रथमानमानसो **देवबोध**विबुध इमा ।
स्थपतिरिव स्थापयिता गुरुषु नतोतनुत साहाय्य ॥ १५ ॥

**चांद्रे** कुले कलशत किल सूरि**दे**वानदाग्रशिष्य**क**नकप्रभसूरिनाम्न ।
**प्रद्युम्नसूरि**रुदित कवितासमुद्रमुष्टिंधयोबुव**दशोधयदेष वृत्ति** ॥ १६ ॥

उत्सेकतोत्सूत्रनिरूपणाद्यैर्याशातना स्यात् तनुतापि काचित् ।
मिथ्यास्तु मे दुष्कृतमत्र साक्षी श्रीसघभट्टारक एव तीर्थ ॥ १७ ॥

एकैकेन विमोहशक्यचरणाश्छित्त्वा कषायानिमान्
दीप्ते भानु-कृशानुधामनि मनश्चैकेन हुत्वात्मन ।
मन्त्रस्याष्टशतैरितीह जपितैस्तै पचभि सिद्धये
गाथाभिर्गुरुगुफिता विजयते जप्**योपदेशावलिः** ॥ १८ ॥

**कल्पा**वि किरणादितो **विवरणा**द् विज्ञाय विज्ञात्मना-
माम्नायाद्**उपदेश**पद्धतिमिमामासेवमानो मुदा ।
लोकाग्रोपरिवर्तिनीमभिमुखीं कुर्वीत वीतान्यधी-
वृत्तिर्निर्वृतिदेवता शिवपुरीसाम्राज्यकाम, कृती ॥ १९ ॥

तत्रोदित्वरसप्तभूमिकमहाप्रासादराजागण
यावद् भाति जगद्गुरोर्भगवत॰ तीर्थेशितु शासन ।
तावच्छ्रावक–साधुधर्मविजयस्तम्भद्वयालविनी
वृत्तिर्वदनमालिका विजयता तत्रोपदेशस्रज ॥ २० ॥
सेय पुरे धवलके नृपवीरवीरमत्रीशपुण्यवसतौ वसतौ वसद्भि ।
वर्षे ग्रह-ग्रह-रवौ कृतभार्कसरयैः श्लोकैर्विशेषविवृतिर्विहितादभुतश्री ॥२१
इत्याचार्यश्रीउदयप्रभदेवसघटितायामुपदेशमालाया, कर्णिकाया विशेषवृत्तौ तृतीय परिवेश॰ सपूर्ण । ग्र ३७१४ एतावता च सपूर्णा उपदेशमालायाः कर्णिकाख्या विशेषवृत्तिरिति ग्रथ १२२७४ । छ । छ ॥

**१८९ (१) चन्द्रप्रज्ञप्ति** (मूल) प १–४६, ३४½′×२½″

Colophon —

सवत् १४८० वर्षे फागुणवदि ११ शनौ । ॐ श्रीसीमंधरस्वामिने नम. । छ । स्वस्ति श्री॰ ॥

(२) **चन्द्रप्रज्ञप्तिटीका** by **मलयगिरि.** प १–२७३

Beginning —

वदे यथास्थिताशेषपदार्थप्रविशासक ।
नित्योदित तमोस्पृष्टजैन सिद्धातभास्कर ॥ १ ॥
विजयता गुणगुरवो गुरवो जिनवचनभासनैकपराः ।
यद्वचनवशादहमपि जातो लेशेन पटुबुद्धिः ॥ २ ॥

End —

चंद्रप्रज्ञप्तिमिमामतिगभीरा विवृण्वता कुशल ।
यदवापि मलयगिरिणा साधुजनस्तेन भवतु कृती ॥

इति श्रीमलयगिरिविरचिता चद्रप्रज्ञप्तिटीका समाप्ता । मगल महाश्री. । शुभ भवतु श्रीचतुर्विधसघस्य ॥ ग्रथाग्र ९५००

Colophon —

सवत् १४ आषाढादि ८१ वर्षे भाद्रपदवदि १ शनौ ।

Pras'asti of the Donor —

ॐ नम॰ । श्रीश्रीमालकुले तेजा मत्री वानूश्च तत्प्रिया ।
आसस्तत्तनया मेला–मेघा–सेगाह्वयास्त्रयः ॥ १ ॥
तेषा डाही धर्मिणि कांऊनाड्य क्रमादिमा॰ पत्न्यः ।
मेलापुत्रा गोरा–सांईआ–रामदेव–चांगाख्या॰ ॥ २ ॥

इतश्च मेघादयिता धर्मिणिधर्मकर्मठा ।
घोघानगरवास्तव्यमत्रीसिघातनूद्भवा ॥ ३ ॥
कडुआ–धांगाबधुप्रभृतिकुटुबान्विता सुधर्मरता ।
श्रीमज्जैनेद्रागमभक्तिभरोल्लसितचेतस्का ॥ ४ ॥
तपाधिपश्रीगुरुसोमसुंदरोपदेशतस्त्र्यष्ट-दिगिदु १४८३ वत्सरे ।
अलीलिखत् स्वस्य हिताय चंद्रप्रज्ञप्तिवृत्ति वरताडपुस्तके ॥ ५ ॥
श्रीरस्तु ।

३९० **आवश्यकनिर्युक्तिचूर्णि** (प्रा०) प ४०३, ३३″×२½″

Colophon —

आवस्सगनिज्जुत्तिचुण्णी समत्ता । मगलमस्तु ।

सवत् १३६७ वर्षे पोषशुदि सोमे जवराला या श्रा । आवडप्रभृतिभि॰ •
श्रेयसे अष्टादशसहस्रप्रमाणमावश्यकचूर्णिपुस्तक नव्य गृहीत ॥

३९१ **भगवतीविशेषवृत्ति** by **अभयदेव** प ४३८, ३२″×२″

Colophon —

सवत् १३१८ वर्षे पौषशुदि ९ शनौ श्रीमरुकोटवास्तव्यसा० हरियडसुत सा० वि(थि)रपाल तत्तनय वीर नेपाभ्या कुटुबश्रेयसे पितृष्वसाराल्हीश्रेयोर्थं इह वामनस्थले के भगवतीवृत्तिपुस्तक लिषापित ॥

३९२ **त्रिषष्टि** (दशम पर्व) प १६८, ३३″×२½″

Colophon —

सवत् १३७२ वर्षे मार्ग वदि १३ भौमे पुस्तक लिखितमिद ॥

३९३ **विशेषावश्यकवृत्ति** (द्वितीयखण्ड) प ३१८, ३५″×२″

Beginning —

उद्देसु निद्दिस्सइ पाय सामण्णओ etc

Colophon —

समस्त ग्रथाग्रं २८००० शुभ भवतु । सवत् १४५३ वर्षे भाद्रपदवदि १४ गुरौ । प्राग्वाटज्ञातीयव्य० आयाभार्यया श्रा० आसलदेव्या व्य० आकाधर्मसीह-वाछा-देवादिपुत्रै सिवादिपौत्रैश्च युतया तपागच्छनायकश्रीदेवसुंदरसूरिगुरूणामुपदेशेन श्रीपत्तने स १४५३ वर्षे श्रीविशेषावश्यकद्वितीयखड लेखयति स्मेति भद्र ॥

३९४ **प्रमेयकमलमार्तण्ड** (प्रथमखण्ड) प २७८, ३६′×२″

Colophon —

प्रमेयकमलमार्तंड. खड. म० हींदाभार्याश्रा० पींचूसत्क ।

**३९५. उपासकदशादिपञ्चाङ्गसूत्रवृत्ति** by **अभयदेव**

प २२६, ३३″×२′

Colophon —

पचानामपि वृत्ति–सूत्र–सर्वाग्र ११५६९

सवत् १४५५ वर्षे ज्येष्ठशुदि ३ गुरू पचागीसूत्र–वृत्तिपुस्तक लेखयाचक्रे ।

श्रीकायस्थविशालवशगगनानित्योत्र **जाना**भिध
सजात' सचिवाग्रणीर्गुरुयशा श्रीस्तभतीर्थे पुरे ।
तत्सूनुर्लिखनक्रियैककुशलो **भीमा**भिधो मत्रिराट्
तेनाय लिखितो बुधावलिमन प्रीतिप्रद पुस्तक. ॥ १ ॥

शुभ भवतु श्रीसघभट्टारकस्य । ५ । छ ॥

Pıas'astı of the Donoı —

नम' श्रीसर्वज्ञाय ।

**प्राग्**वाटवशमुकुटप्रकटप्रतिष्ठ श्रेष्ठी बभूव भुवि **लाषण** इत्यभिख्य' ।
शीताशुरश्मिभरभासुरकीर्तिसारैर्य सर्वतोपि धरणि धवलीचकार ॥ १ ॥

एतत्पाणिगृहीती **साऊ**रिति विश्रुता विशदशीला ।
**जि**नवचनबद्धरगा या गगामनुकरोति निजचरितै ॥ २ ॥
**आल्हू**रित्यभिधाना सकर्णजनवर्णनीयगुणनिवहा ।
अभवत् तयोस्तनूजा **जि**नादिपूजाविधानरता ॥ ३ ॥
तामुपयेमे सुकृती मत्री वरो **वीर**मो विशदबुद्धि ।
धीसखशतमखधीदा**चां**पलदेवीप्रसूततनुजन्मा ॥ ४ ॥

सत्पात्रदानसफलीकृतभूरिवित्ता श्रीधर्मकर्मकरणप्रवणैकचित्ता ।
या स्वैर्विशुद्धचरितैर्विदुषामदोषश्लाघास्पद समजनिष्ट लसत्प्रतिष्ठा ॥ ५ ॥
श्रीम**त्त**पागणनभोगणसूरसूरिश्री**देवसुंदर**गुरुप्रवरोपदेश ।
श्रुत्वा सुधासममसीमगुणासमाना सा श्रावकाचरणचारुरताथ **आल्हू** ॥ ६ ॥

मत्वासारतर धन धनफल लिप्सुर्निजश्रद्धया
**वेदेषूदधि–शीतदीधिति** १४५४ मिते सवत्सरे वैक्रमे ।
लक्ष्मीवैश्रवणातिशायिजनते श्री**स्त**भतीर्थाभिधे
द्रगेलीलिखदेतदद्भुततम **पंचांगिका**पुस्तक ॥ ७ ॥
आ चद्रादित्यमेतद् विरचितचतुरानदसपद्विशेष
सख्यावद्भिर्मुनीद्रैरहमहमिकया वाच्यमान वितद्रै ।

उद्यद्दु:खातिरेकाकुलनिखिलजगज्जी[वजी]वातुकल्प
श्रेय श्रीहेतुभूत प्रवचनमनघ जैनमेतच्च जीयात् ॥ ८ ॥

**३९६. आवश्यकलघुवृत्ति** by **तिलकाचार्य** प ३५९+१

ग्रंथसंख्या सर्वाग्र १२३२५

Pras'asti of the Donor —

**अ**णहिल्लपुरमस्ति स्वस्तिकप्रायमूर्व्या नय–विनय–विवेकच्छेकलोकावरुद्ध ।
अपरनगरशोभागर्वसर्वस्वजैत्र वरजिनगृहमालास्वर्विमानोपहासि ॥ १ ॥
श्री**श्री**मालकुलस्तत्र **रा**बाख्य श्रेष्ठिपोभवत् ।
नानादानादिसद्धर्म्मकर्म्मकर्म्मठमानस: ॥ २ ॥
तस्य **रा**जलदेवीति जायाऽजायत सद्गुणा ।
विवेक–विनयप्रह्वा शीलालकारधारिणी ॥ ३ ॥
**सां**डा **सो**मा **मे**घा **भू**पति **पां**चाह्वयास्तयो. पच ।
पुत्रा. सुतीर्थयात्राद्यवाप्तसघाधिपत्यपदा ॥ ४ ॥
**ना**मस्तवपचशतीकायोत्सर्गैकतत्पर सततम् ।
**सां**डाख्य सघपतिर्विशिष्य तेष्वद्भुतक्रियो जज्ञे ॥ ५ ॥
तेषा **सां**डादीना पचानामपि च पच पह्न्योम्  ।
**का**मलदेवी **सि**गारदेश्च **मा**णिक्यदेवी च ॥ ६ ॥
**भा**वलदेवी **पा**ल्हणदेवी ख्याता सुशीलत. क्रमत. ।
श्रीदेव–गुरुषु भक्ता. सद्धर्मकर्म्मविधौ ॥ ७ ॥ युग्मम् ।
**सांडा**–**का**मलदेव्योस्तनया. पचाभवन् क्रमादेते ।
श्रीधर्मकर्म्मकुशला सम्यक्त्वाद्यैर्गुणै: प्रथिता ॥ ८ ॥
**म**नाख्य प्रथमस्तेषा धर्मण **क**र्म्मणस्तथा ।
**डा**हाख्यश्च चतुर्थोस्ति **यो**धाख्य. पचम: पुन: ॥ ९ ॥
**पु**त्र्यौ तथा द्वे गुणराजिराजिते **पू**रीति **वा**वूरिति विश्रुताभिधे ।
यन्मानस श्रीगुरु–देवभक्तियुक् श्रीधर्मपीयूषरसेन पूरित ॥ १० ॥
दयिता. क्रमतस्तेषा विमलान्वय–विनय–शीलसपन्ना ।
रतनू कांऊ **मांई मां**कू **वा**ल्हीति नामान ॥ ११ ॥
**म**नाकस्य **स**मधर: **सा**लिगश्च सुतावुभौ ।
धर्मणस्य सघपतेर्ह्र्षा–**बा**लाभिधौ पुन ॥ १२ ॥
**डा**हाकस्य **मां**इ आद्या **हं**सो **यो**धागजस्तथा ।
सर्वेप्यमी गुणमणिश्रेणिरोहणभूधरा ॥ १३ ॥

नानाविधान् धर्मविधीन् सृजन् सदा विशुद्धधी॰ सघपतिस्तु **कर्म्मणः** ।
श्रीज्ञानभक्ति विशदा हृदा दधद् द्रव्यव्ययेन प्रचुरेण हर्षत. ॥ १४ ॥
श्रेष्ठि**साल्हाक-सिगारदेवी**पुत्र्या पवित्रया ।
**माईनाम्न्या**निश शुद्धक्रियया प्रिययान्वित ॥ १५ ॥
श्री**सोमसुंदर**गुरुप्रवरोपदेशात् स्वश्रेयसे **द्वि-नव-वार्धि-शशांक**वर्षे ।
**आवश्यक**स्य **लघुवृत्ति**मलेखयत् **श्रीताडीय**पुस्तकवरे दृढधर्मभाव. ॥१६
पुस्तकेष्वपरे**ष्वन्ये ग्रथा**स्तेनाथ लेखिता ।
अय च वाच्यमानास्ते जीयासुर्विबुधैश्चिर ॥ १७ ॥
श्री**सोम**सुदरसूरिगुरवो जयतु ॥ श्री । ७ । ठ० **वैकुठ** ठ० **कठा** ।

**३९७** (१) **सूत्रकृताङ्गवृत्ति** ( अपूर्ण ) प २८३

Beginning —

प्रयोजनादिति समुदयार्थोधुनावयवार्थ कथ्यते । तत्र तीर्थं द्रव्य-भावभेदाद् द्विधा ।

(२) **सूत्रकृताङ्ग** ( मूल ) प १-४८

(३) ,, **निर्युक्ति** प ४८-५४

Colophon —

पद्मोपम पत्रपराप(रप)रान्वित वर्णोज्ज्वल **सूक्त-मरदसुंदर** ।
मुमुक्षु-भृगप्रकरस्य वल्लभ जीयाच्चिर **सूत्रकृदंग**पुस्तक ॥
शुभ भवतु ।

सवत् १४६८ वर्षे ३ शुक्रे अद्येह श्री**पत्तने** लिखितमिद ॥

**३९८** (१) **उत्तराध्ययन** ( मूल ) प १-३५, ३४"×२$\frac{1}{2}$"

Colophon —

ग्रथाग्र २००० शुभ भवतु । सवत् १४५२ वर्षे ज्येष्ठवदि ८ भौमे ।

(२) **उत्तराध्ययननिर्युक्ति** ग्र ६०७ प ३६-४२

(३) ,, **चूर्णि** प १-४४

(४) ,, **बृहद्वृत्ति** ( द्वितीयखण्ड ) by **शान्त्याचार्य**
प ४५-२४८

Colophon —

सवत् १४५२ वर्षे अश्विनशुदि १ प्रतिपत्तिथौ रविदिने श्री**उत्तराध्ययनबृहद्वृत्ति**पुस्तक लिखित ॥ ग्रथाग्र १८००० । ७ । शुभ भवतु ॥ ७ ।

**३९९.** (१) **आचाराङ्ग** ( मूल ) ३४$\frac{1}{2}$"×२"

(२) ,, **वृत्ति** by **शीलाङ्काचार्य.** ग्र १२००० प ३५६

Colophon —

सवत् १४५० वर्षे भाद्रपदवदि १ शुक्रे रेवत्या पुस्तक लिखित ॥

सद्धर्मव्यवहारिदेसलसुतः ख्यात क्षितौ सर्वत
प्राग्वाटान्वयमडन समभवन्मेघाख्यसघाधिप ।
जाया मीणलदेवी नाम विदिता तस्य प्रशस्याशया
पुत्री पुण्यवती तयोर्गुणवती स्याणीति सज्ञाभवत् ॥
सम्यग्दृग् नरसिहगांधिकसुत श्रद्धालुवर्गाग्रणी
जज्ञे गागलदेविसूर्धणिगाह्वान प्रधान सदा ।
जाया याजनि तस्य शस्यचरिता पुण्यक्रियाप्रत्यला
नित्य श्रीजिनपूजनैकरसिका दानादिबद्धादरा ॥
श्रुत्वा श्रीगुरुदेवसुंदरमहाधर्मोपदेश तया
वर्षे विक्रमतो नभः-शर-नदीनाथेदु १४५० सख्ये स्वक ।
द्रव्य भूरि वितीर्य पुस्तकमिद सुश्रेयसे लेखित
नित्य नदतु वाच्यमानमनघैर्मेधाविभि साधुभिः ॥

शिवमस्तु श्री. ।

**४००** **आचाराङ्गटीका** ( त्रुटित अपूर्ण ) by **शीलाङ्क**
प १०१–३५४, ३३″×२″

**४०१.** (१) **परिशिष्टपर्व** Paper MS प १–११९, २१$\frac{3}{4}$″×२$\frac{3}{4}$″

Colophon —

सवत् १३९६ वर्षे आसोजसुदि १५ शुक्रे अश्विननक्षत्रे अद्येह श्रीअणहिलपुर-पत्तने श्रीपरिशिष्टपर्वपुस्तक सपूर्णमलेखि ।

(२) **शान्तिनाथचरित्र** by **अजितप्रभसूरि** प १–१७९*

Colophon —

सवत् १३८४ वर्षे अश्विनिशुदि १३ सोमे अद्येह श्रीश्रीमाले बृहद्गच्छीय-श्रीवादीद्रदेवसूरिसताने श्रीविजय नसूरिशिष्यश्रीमाणिक्यसूरिशिष्यश्रीधर्मदेव-सूरीणा शिष्यैराज्ञापरिपालकै श्रीवयरसेणसूरिभि साध्वीमत्सुदरि विजयलक्ष्मी सा पद्मलच्छि सा चारित्रलक्ष्म्या अभ्यर्थनया स्वश्रेयोर्थं श्रीशांतिनाथचरित्र सर्वेषामाचार्योपाध्यायप्रमुखसाधूना वाचनार्थं पठनार्थमलेखि लिलिखे लिख्यते स्म लिखित । उदकानल etc

नदतु श्रीशातिनाथस्य चिरकाल यावत् पुस्तक ॥

---

* १४–११८ पत्राणि न सन्ति ।

**४०२ कथावली** प ३०७, ३४″×२″

Beginning —

ॐ नम **सरस्वत्यै** ।

नमिऊण **नाइ**(हि)जणिय देव सरस्सइ–गुरूण माहप्पा ।
विरएमि चरियसार **कहावली**मबुहसुहबोह ॥ १ ॥
धम्मत्थ–काम–मोक्खा पुरिसत्था ते अ सुत्तिआ जेहि ।
पढममिह बेमि ते चिय **रिसहेसर–भरह**चक्कि त्ति ॥ २ ॥

End —

ग्रथाग्र १२६०० सवत् १४९७ वर्षे वैशाषवदि १२ बुधे अद्येह श्री**स्तंभ**तीर्थे मह **माला**सुत**सां**गालिखित ॥ छ ॥

**४०३ कथावली** ( द्वितीयखण्ड ) by **भद्रेश्वरसूरि** प ३०२

Beginning —

**बं**भदत्तचक्कवट्टिकहानक प्रारभ्यते ।

**ह**रिवसउब्भव**अ**रिट्ठनेमिजिण–भणिस्समाण**पा**सजिणाण च विचाले बारसमो **बं**भदत्तचक्कवट्टि त्ति कहा भण्णइ । **सा**गेए नयरे

End —

**भवविरहसूरि** त्ति गय ।

भणियाउ य कहाउ **रि**सहाइजिणाण **वी**रचरिमाण ।
वत्तित्थकाहाहि सम **भवविरहो** जाव सूरि त्ति ॥ छ ॥
इय पढमपरिच्छेओ तेवीससहस्सिओ सअट्ठमओ ।
विरमइ **कहावली**ए **भद्देसर**सूरिरइउ त्ति ॥ छ ॥ छ ॥

इति **कहा**वली कस्य द्वितीय खड समाप्त । छ ॥ सवत् १४[९७] ।

**४०४ श्रेयांसचरित्र** (प्रा०) [ by **देवप्रभसूरि** ] प २३७, ३०½″×२½″

Beginning —

जस्ससस्थलकुतलवल्ली सउणाण वल्लहा स[ह]इ ।
सुमणोरम्मा सिवफलहेऊ सो जयइ **पढ**मजिणो ॥
पडिवज्जतो वि सया कलतर नेह जस्स मुहवितू (?) ।
पावइ चदो नदउ सिरीनिवासो स **सेयंसो** ॥

End —

एव ग्रथाग्रमेकादशसहस्रसख्यमिति । इति श्री**श्रे**यासचरित समाप्तमिति ।

एत्थ त्थि **चदगच्छो** चदो ब भव अहो करेमाणो ।
उत्तमसत्तरिसीहि सहिओ असवन्नपुन्नभरो ॥

तत्थ य सूरीण परपराए सिरि**अभयदेव**सूरि त्ति ।
विद्दलियवाइदप्पो उप्पन्नो गणहरो वाई ॥
जेण **चउरासीवाय**विजियसपत्तजयपडाएण ।
**वायमहन्नव**गथो निम्मविउ(ओ) कित्तिगथो व्व ॥
तयणु **धणेसर**सूरी जातो जेण निरीहपहुणा वि ।
**भोज**नरिदसभाए गहिया वायमि जयलच्छी ॥
अह **अज(जि)यसिंह**सूरी अहेसि जेण धरित्तु वयसुद्ध ।
घोर विसयप(पि)वासा-पिसाइया सुट्ठु निग्गहिया ॥
तो **वद्धमाण**सूरी सुदुद्धरसमाभरुव्वहणदक्खो ।
दिक्कुजरो व्व गरुओ आसि दिसापावियपइट्ठो ॥
ठविय च तेण सिरि**देव**–**चद**प्पह त्ति सूरिजुग ।
सप्पहप्पयासणे जेण सूर–चदाइय भवणे ॥
ताण च मन्नणिज्जो मुणिवसहो सिस(स्स)लद्धिसपन्नो ।
आसी **कुल**भूसणगणी गच्छधुरावरणधोरेओ ॥
जस्सित्थ पउमहत्थो कप्पदुमपल्लवो व्व जाण सिरे ।
जाओ ते सव्व(च्च)विया वलियगीवाए लच्छीए ॥
अह सिरि**भद्देसर**सूरिगणहरो आसि जस्स चरिएण ।
लोउत्तरेण अज्ज वि रोमचिज्जति अगाइ ॥
जावज्जीव एगतरोववासिस्स [जस्स देसणया ।]
सिरि**उज्जयत**तित्थ **सज्जण**सचिवेण उद्धरिय ॥
जस्स य आएसेण **सतुय**सचिवेण **सज्जणे**ण व ।
**वडउदयं(रं)**मि विहिया सवित्थरा गरुयरहजत्ता ॥
तत्तो पालियतिखग(क्खग्ग)खग्गधारासरिच्छवयचरिओ ।
सिरि**अजियसिंह**सूरी जाओ सव्वाइसाइगुणो ॥
जेण अविसगयागमत्थ आगामिण सुणतेण ।
भुवणे ण कस्स चित्त चमक्किय दुक्कहस्सावि ? ॥
तेसि सिरि**भद्देसर**सूरीहि पाविओ नियपयमि ।
सिरि**अ**जियसिहसूरीहिं पुण समत्थाण अत्थाण ॥
वागरण–तक्क–साहित्त(च्च)–छद–सिद्धत–जोइसाईण ।
पार वच्छलवसेण लभिओ कालमाणेण ॥

सिरिदेव[प्पहसूरी] सजाओ तत्तबिंदुपमुहाइ ।
विहियाइ पगरणाइ जेण जणाणुग्गहट्ठाए ॥
निम्मविओ वित्तेहि जेण प्पमाणप्पयासतक्को य ।
तेण च्छणचदुज्जलम(मा)हप्पगुणमणिनिहाणस्स ॥
अब्भत्थणाए सिरिसिद्धसेणसूरिस्स सिस्सरयणस्स ।
भत्तस्स सिरिजिणेसरसूरिस्स य सव्वविज्जस्स ॥
अणहिल्लवाडयपुरे रइय सेज्जंससामिणो चरियं ।
साहज्जेण पडियजिणचंदगणिस्स सीसस्स ॥
लिहिय च पढममेय गणिणो सिस्सेण विमलचदेण ।
ईहतेण समाणमत्तणो पुण्णपब्भार ॥ छ ।

Colophon —

स १४७० माघवदि ९ बुधदिने पुस्तक भादाकेन लिलिखे ।

४०५. **विशेषावश्यकलघुवृत्ति** प २७५, ३३½″×२″

Beginning —

कयपवयणप्पणामो वुच्छ चरणगुणसगह सयल ।
आवस्सयाणुओग गुरूवएसाणुसारेण ॥ १ ॥
प्रोच्यते ह्यनेन जीवादयोऽस्मिन्निति वा प्रवचन ।

End —

परमपूज्यजिनभद्रगणिक्षमाश्रमणकृतविशेषावश्यकप्रथमाध्ययनसामायिकभाष्यस्य विवरणमिद समाप्त ॥ छ

सूत्रकारपरमपूज्यश्रीजिनभद्रगणिक्षमाश्रमणप्रारब्धा समर्थिता श्रीकोट्याचार्यवादिगणिमहत्तरेण श्रीविशेषावश्यकलघुवृत्ति॰ ।

Colophon —

संवत् १४९१ वर्षे द्वितीयज्येष्ठवदि ४ भूमे श्रीस्तभतीर्थे लिखितमस्ति ॥ छ ॥
चैत्रवदि १२ शनौ प्रभाते मडित ।

४०६ (?) **भाष्य** (अपूर्ण) प ४८–११७

४०७ **स्याद्वादरत्नाकर** (परि ५–६ अपूर्ण) प ३४१, ३३¾″×२¼″

प २२९—इति शास्त्रवार्तासमुच्चयसमुल्लासनपूर्णचद्रश्रीमन्मुनिचद्रसूरिपादपद्मोपजीविना श्रीदेवाचार्येण विरचिते स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालकारे विषयस्वरूपनिर्णयो नाम पचम॰ परिच्छेद॰ । ग्रथाग्र ७२८४

End —

यः शब्दोन्वय–व्यतिरेकाभ्या वाचकत्वेन दृश्यते । स तस्याथ (र्थ) यथा गवादिशब्दाना सास्नादिमदादयो

एकवचनस्त्रीशब्दस्य परिभाषितोर्थोऽस्ति । दृश्यते त्वागमे लोकरूढ एवार्थे स्त्रीशब्द इत्थीओ ज

The original Ms from which the present manuscript is copied seems to have been much damaged as the copyist has left out many lines

**४०८ योगशास्त्रविवरण** (द्वादशप्रकाश) ले स १२७५ प ३६५*

**४०९. भगवती** (मूल) प ४३४, ३३½"×२½"

Pras'asti of the Donor —

श्रीद्वादशागहिमरश्मिसमुद्रतुल्या कल्याणपकजविकासनभानुभास॰ ।
अज्ञानदुस्तरतमोभरदीपिकाभा विश्व पुनतु किल **वीर**जिनस्य वाच ॥ १ ॥

सम्यक्सम्यक्त्वसिंहाक्र(द)तसुकृतिमन.कदर स्थैर्यसार
प्रस्फूर्जत्कीर्तिचूलो विनय- नय–शमामूल्यरत्नाभिराम ।
दानाद्युद्दामधर्मप्रवरवनवृत॰ श्रीसमिद्ध. पृथिव्या-
मास्ते **प्राग्वाटवंश**स्त्रिदशगिरिरिवानेकसत्कृत्यशृग ॥ २ ॥

योऽचीकरन्**मंडप**मात्मपुण्यवल्लीमिवारोहयितु सुकर्मा ।
ग्रामे च **संडेरक**नाम्नि **वीरचैत्ये**ऽजनि श्रेष्ठिवर. स **मोखू** ॥ ३ ॥

**मो**हिनी नाम तत्पत्नी चत्वारस्तनयोत्तमा ।
**य**शोनागो धर्मधुर्य **वाग्**धन शुद्धदर्शन ॥ ४ ॥
**प्र**ल्हादनो **जाल्ह**णश्च गुणिनोऽमी तनूभवा. ।
**वाग्**धनस्य गृहिण्यासीत् **सीतू** सम्यक्त्व–शीलभाक् ॥ ५ ॥
तत्कुक्षिभूरभूत् पुत्र**श्चांड**सिंहो विशुद्धधी. ।
सद्धर्मकर्मनिष्णातो विनयी पूज्यपूजक ॥ ६ ॥
पच पुत्र्योऽभवन् **खेतू** **मू**जला **रत्न**देव्यथ ।
**म**यणल–**प्री**मले सर्वा निर्मला धर्मकर्मभि॰ ॥ ७ ॥

इतश्च । **वी**जाभिधोऽभवन्मत्री **खेतू**नाम्नी च तत्प्रिया ।
तत्पुत्री **गौर**देवीति धर्मकर्मसु सोद्यमा ॥ ८ ॥

---

* ३२१ क्रमाङ्केन सह सम्बद्ध ज्ञायते ।

तामूढवाश्चांडसिहस्तत्तनूजा गुणोज्वला· ।
आद्य· पृथ्वीभटो धीमान् रत्नसिहो द्वितीयक· ॥ ९ ॥
वदान्यो नरसिहश्चतुर्थमल्लस्तु विक्रमी ।
विवेकी विक्रमसिहश्चाहडश्च शुभाशय ॥ १० ॥
मूजालश्चेत्यमीषा तु कल्याणाय कृतोद्यमा ।
स्वसा खोखी रता धर्मे पत्न्यश्चैषा क्रमादि[मा] ॥ ११ ॥
प्रथमा सूहवदेवी सूहागदेव्यथापरा ।
निपुणा नयणादेवी प्रतापदेव्यथो मता ॥ १२ ॥
भादला चांपलादेवी पूर्वाचारपरायणा ।
आसा च पुत्रा पुत्र्यश्चाभवन् भाग्यभराचिता· ॥ १३ ॥
श्रेष्ठिनो या ध(वाग्व)नस्यैते दे(व व)शे वृद्धिमुपेयुषि ।
श्रीरत्नसिहसूरीणा पार्श्वे शुश्राव देशना ॥ १४ ॥
पेथडः प्रवराचार प्रयुक्तो निजबधुभि ।
जनकस्य सदा भक्तो रक्तो धर्मगुणार्जने ॥ १५ ॥
दान धनस्योत्तममस्ति लोके ज्ञानात् पुनस्तत् कथित जिनेंद्रैः ।
तत्रापि सिद्धातसम न ज्ञान दान तु तस्यैव महत् प्रधान ॥ १६ ॥
इत्याकर्ण्य स गौतमस्य वदनाभोजेपु भृगावलि–
कल्प चैवमलीलिखत् भगवतीसूत्र सटीकं मुदा ।
श्रीसिद्धातविचारसार
श्रेयसे पेथडः ॥ १७ ॥
वेद्–बाण–हुताशेदुमिते विक्रमवत्सरात् ।
पुस्तकव्याख्यान कारयामास य· पितु· ॥ १८ ॥
तिग्माशौ युवराजता सचिवतामारोप्य जीवे कवौ
छाया–क्ष्मासुतयो पुरा वनपद सल्लेखकत्व बुधे ।
राज्य तारकपत्तियुक् प्रकुरुते दक्षजे
प्रकाश सता ॥ १९ ॥

Colophon —

सवत् १३५३ वर्षे अद्येह वि(वी)जापुरे श्रीसोमतिलकसूरिभि श्रीभगवतीसूत्रपुस्तक व्याख्यातं चार्चित प० हर्षकीर्तिगणिना ॥ छ ॥ छ ॥ शुभ भवतु श्रीसकलसघस्य ॥ छ ॥

**४१०. धर्मविधिवृत्ति** (त्रुटित) by **जयसिंह** प २५८, २९″×२″

Beginning —

ए । धम्ममहामहिमुद्धरिउमिच्छुणो ज विहियसत्तसिरो ।
दाउ साहेज्ज पिव उवट्ठिओ सहइ भुयगवई ॥
इय इट्ठदेवयाकित्तणेण निद्दलियविग्घसदोह ।
**उवएससार**मणह फुडक्खर कि पि जपेमि ॥

End —

अथ कविरात्मनो गुरुकुल यितुमाह ।
आख्यायैन विविधसुखद धर्ममर्हत्प्रणीत
सर्वानर्थप्रहतिचतुर यन्मया पुण्यमाप्त ।
तेनैतेषा भवभयभयाभिद्रुतान

॥ १ ॥

व्योम्नीवातिमहीयसि स्फुटलसत्सोमे न तारेत् त्वयो (?)
**चां**द्रे सयमिना बभूव शशिवत् सद्वृत्तताशोभित ।
सूरि· सर्वजनप्रमोदजनक.

॥

त् रभरभराकृष्टिर्तुर्यो (?) यशस्वी सूरि
सिद्धातवेत्ता दितमदनसदोभूद् **यशोदेवसूरि** ।
तस्माद् द्रव्यकुशेशयोष्णकिरणादातोत्पथप्रस्थिते

॥

न क्रियावन्मत
स्व प्रस्थानविधावबुद्धिविभवोप्यभ्यर्थितस्तैरसौ ।
तद्द्बधस्य परोपकारकृतये सद्धर्मवि व्याख्यप
ख्यातस्याल्पमतिप्रयो
कि तु रचिता यावज्जिनेद्रोदितो
धर्मो विश्वमिद च तावदखिलपापक्षयान्नदतात् ॥
शब्दपारायण–च्छद –काव्य–सिद्धातकोविदै· ।
शोध्येयमुररीकृ ॥
धीमता ।
लिखितेय पुस्तके प्रथम ललामलिपिसुदरा ॥
द्विसहितचत्वारिशच्छतयुक्तैकादशसहस्रीय ।
श्लोकाना **धर्मविधिवृत्ति**मथस्य म. ॥

Pras'astı of the Donor —

णनिचिततनुष्ठक्कुर· पूर्णपाल·
रुक् माता भावसार जिनपतिगदिते दत्तचित्ता सुधर्म्मे ।
भार्या भूस्ववर्यप्रणयरतिगृह रुक्मिणी
सुकृती ठकुरो माह्वाख्य ॥ २ ॥
बधुजनकुमुदविकसनकर्त्री हर्त्री च दु खदाहस्य ।
सूहदेवी काता तस्याभूच्चद्रमूर्तिरिव ॥ ३ ॥
पुत्रस्तयोरस्ति

## ४११. नेमिनाथचरित्र (प्रा०) by रत्नप्रभसूरि प २७७, ३१"×२½"

Beginning —

जयइ निरजण–निच्चल–निम्मल–निस्सीम–निस्सम–सरूवा ।
सालोयालोयविलोयलोललीला नवा हि(दि)ट्ठी ॥
पल्लवियपुव्वरगो कयभवविक्खभविब्भमो जयइ ।
राइमइनेहनडियनट्ठावयसेहरो नेमी ॥
जस्स सयमुरगराओ विरेहए आगउ व रक्खाए ।
सो पासनाहसासयसुहनिहिकलसो जए जयइ ॥
विब्भमरहियसमुन्नयसमिसरलासोयतिलयपुन्नाग ।
भवतत्वतण(?)सिद्धत्थनदण सेवह सया वि ॥
उसभाइणो जिणिदा जयति जे भरहखित्तउत्तिन्ना ।
वयववसहकमविसुद्धा सिद्धिखले अक्खया जाया ॥
सइसुक्कपक्खिसेवियपयकमला वसमई हियप्पगुणा ।
पयडुत्तरगसगा तित्थेससरस्सई जयइ ॥
सुकइकए कव्वरस घडिमालाए सुद्धरति व ।
फलिहक्खमालाकला सा जयइ सरस्सइदेवी ॥
चडइ सुतुगचगे गुरुवसे कित्तिणट्टिया जस्स ।
नर–सुर–असुरसहाए स देवसूरी गुरू जयइ ॥
सो कव्वरसो नन्नो सिज्झइ करसइ कइस्स जमि सुए ।
सज्जण–दुज्जणवत्त सुवन्न–दुवन्नय होइ ॥
त कव्व ज नव्व सा भज्जा जा पइस्स सुहसज्जा ।
ते सुयणा जे खलयणखलीकया नो खलु खलति ॥

End —

सिवसुहरसस्स सिद्धी असेसदुरियावहारवरमतो ।
सयलरसाण परिसये जयइ सिरि**नेमिचरिय**मिण ॥ ५
गुरुसरिसकुलो मयरोहसोहिओ सत्तरगआभोगो ।
इह अत्थि **वड्डगच्छो** पारावारो विव अतुच्छो ॥
सुमहेदेउ पवित्तो अमयमउ(ओ) विहियकुवलयाणदो ।
सिरि**मुणिचद**मुणिदो पव्वणचदो व तत्थासि ॥
नियगच्छसराउ पमायपकिलजलाउ नीहरिउ(ओ) ।
पत्तपरिवारजुत्तो जसपरिमलभरभरियभुवणो ॥
आरद्धसुद्धधम्मरम्मणुट्ठाणलट्ठमयरदो ।
जो केण पउमो व मत्थयए एत्थ न हु धरिउ(ओ) ? ॥
नियमइमाहप्पाउ पारीकाऊण विवरिऊणेव ।
जेण विउसाण विहिया **कम्मप्पयडी** सुपयत्था ॥
**णे**गतजयपडाया **उ**वएसपयाणि **स**त्थवत्ताउ ।
**स**द(ड्ढ)**स**यरग(धम्म)**वि**दूभयाइणो विवरिया जेण ॥
सिरि**देवसूरि**सुगुरूहि तस्स सीसाहिएहि सूरिपय ।
दसदिसिपसरियजसभरेहि तमलकिय सुचिर ॥
**सिद्ध**सिरोमणि**जयसिंघ**रायपुरउ(ओ) सहाए विबुहाण ।
**थीनिव्वाणे** साहिय पहाविय पवयण जेहिं ॥
जेहि भुवणेक्कमित्तेहि भारह खेत्तयमखिल पि ।
किरणेहि व णेगेहि पभासिय सूरिपवरेहि ॥
**अणहिण(ल)वाड**पुरमि कारविओ साहु**थाह**डेणमिमो ।
जेहि सिरि**वीर**नाहो पइट्ठिओ पउमहत्थेण ॥
सिरि**भद्दे**सरसूरी निवेसिओ तेहि नियपट्टमि ।
पसमाइगुणग्गामेण जो जए ताण पडिच्छदो ॥
अह **देवसूरि**आणाए दिक्खिया **वि**जयसेणसूरीहि ।
लहुएहि भाउगेहि जे सुत्तिसुहापवाहेहि ॥
उट्ठावणविज्जाइसु जेसि नीसेसकज्जेसु ।
जाया गुरुणो सिरि**देवसूरि**णो सइ पसायपरा ॥
सिरि**रयणप्पहसूरी**हि तेहिं जम्मफलमहतेहिं ।
आएसाओ अणुभावओ य दोण्ह पि सुगुरूण ॥

सिरिभद्देसरसूरीमाणसाणदनदिसिद्धिकए ।
नागउरं जवडा (?) ण विसेसउ पच्छया एया ॥
सिरिनेमिचरियमेय वज्जरिय निविडजडमईहिं पि ।
बुहहिययाइ हरिस्सइ पइगुणसोहग्गसगाओ ॥
साहेज्ज सव्वेहि कय कयमित्थ गथमि ।
नयकित्तिबुहेण पुण विसेसओ सोहणाईहिं ॥
सिरिदेवभद्दसूरीहि सूरिसद्दे सु हि सुकइहि ।
परमपसायाणुग्गहपरेहिं परिसोहिय एय ॥
सिरिभद्देसरसूरी संतिप्पहसूरिपभिइणो णेगे ।
बधुसिणेहेणेय वित्थारिय कि चोज्ज ? ॥
बारसतित्तीसुत्तरवरिसे दीवूसवमि पुन्नदिणे ।
अणहिल्ल[नय]रे एय समत्थिय वीरभवणमि ॥ ७ ॥

इति श्रीरत्नप्रभसूरिविरचिते श्रीमदरिष्टनेमिचरिते षष्ठ प्रस्ताव । ७ । ७ ।

Colophon —

सवत् १४७० वर्षे आसो सुदि षष्ठी गुरौ तपागच्छि श्रीसोमसुंदरसूरिगच्छ-नायक. । श्रीस्तंभतीर्थे सह[ज]समुद्र[ग]णीना भडारी लिखापित । पुस्तकप्रथाग्र १३६०० शुभ भवतु ।

**४१२ चन्द्रप्रभस्वामिचरित्र** by **हरिभद्रसूरि.** २९″×२″

Beginning —

सहलियसयलसुयासो सुवाणिओ रायहसकयतोसो ।
विलसिरसुहओ उसहजिणो जयइ जिह सरओ ॥
सुहहेउमित्तमडलउदओ पियपावओ जयपसस्सो ।
हेमतु ब जिणिदो दुहा वि चदप्पहो सहइ ॥
कमलवणप्पडिवक्खो पहियासुहदाणफुरियपयमहिमो ।
हवउ तणुतावहारी सिसिरो इव पासजिणइदो ॥
भमरहियसुमणसीसम–असोग–पुन्नागदावियसमिद्धी ।
सिरिवद्धमाणसामी वसतसमउ ब दिसउ सुह ॥

End —

नियमहिमातिरोहियचितामणि–कामधेणुमाहप्पो ।
चउवीसइमजिणिदो जाओ सिरिवद्धमाणपहू ॥

तत्तित्थमि य **को**डियगणमि विउलाए **वइरसाहाए** ।
**चद**कुलमि य चदुज्जलमि **वडगच्छ**गयणससी ॥
तरणि व्व गरुअतेओ सयभूरमणु व्व पत्तपरमदओ ।
हसो व्व विमलपक्खो सुरगिरिरिव लोयमज्झत्थो ॥
लच्छी–कलाकलावासमाणमेहाहि सव्ववियणामो ।
जाओ पत्तपसिद्धी भयव **जिण**चदसूरि त्ति ॥
वियसतकुमुयकमला नियनियपुहविभु(वु)हच(भ)व्वकयतोसो ।
तस्सासि दोन्नि सीसा रयणीयर–सहस्सकिरण व्व ॥
तत्थ य सुरसो विरइयपरप्पबधा वक(?)धरणिनाहु व्व ।
सिरि**अ**म्बएवसूरी गुणरयणमहोयही पढमो ॥
अणवरयधम्मकम्मोवउत्तचित्तो वि निच्चमपहरणो ।
कयकरणायारो वि हु अविहियरायट्ठिइविसेसो ॥
बहुसमओ वि अमओ पावियउदओ वि पत्तजलसगो ।
बीओ विणेयरयण अहेसि सिरि**चदसूरि** त्ति ॥
पसरियजसपडहारवनच्चावियकित्तितरुणिरयणस्स ।
असरिसगुणमणिनिहिणो पहुणो सिरि**च**दसूरिस्स ॥
**चउवीसइजिणपुंगवसुचरियरयणाभिरामसिगारो** ।
एसो विणेयदेसो जाओ **हरिभद्दसूरि** त्ति ॥
इत्तो य । **सिरिमालपुरुब्भवपोरुयाडवंसे** सु वाणिओ सगुणो ।
मुत्तामणि व्व **निन्नय**अभिहाणो ठक्कुरो आसि ॥
अह पयडीहोउ सिरीदेवीए कहियभाविअच्च(ब्भु)दओ ।
सो **सि**रिमालपुराओ पत्तो **गभूय**नयरीए ॥
तत्थ य तग्गेहमहासरमि विलसतविउलकमलमि ।
पायडियकुमुय**वणराय**मडलोवचियपयविहवे ॥
पसरतगधसिधुरघडाहि वग्गततुरयघट्टेहि ।
कस्स न जणेइ विम्हयमणेगसो उदयवित्थारो ? ॥
बधुमइणाह **अणहिल्लपुरे वणराय**निवइनीएण ।
**वि**ज्जाहरगच्छे **रि**सहजिणहर तेण कारविय ॥
तत्तो विचित्तनयपत्तकित्तिपसराओ रयणनिहिणो व्व ।
बहुसख–सुत्तिसुहओ जाओ **लहरो** त्ति दडवई ॥

वग्गततुरयघट्टस्स **विझगिरिसन्निवेसपत्तस्स** ।
समग्गगहियकुंजरघडस्स तह निययपुरसमुह ॥
आगमिरस्स रिऊहि तग्गयगहणूसुएहि सह समरे ।
जस्सेह **विझवासिणि**देवी धणुहम्मि अवइन्ना ॥
ता पत्तसत्तुविजएण तेण सा **विझवासिणी** देवी ।
पणयजणपूरियासा ठविया रु(स)डत्थलग्गामे ॥
अह लच्छि–सरस्सईओ सद्धम्मगुणाणुरंजियाओ व ।
जस्सुज्झियईसाउ मुचति न सनिहाण पि ॥
तह सिरिवलो वद्धो वित्तपडो जेण टकसालाए ।
सठविओ लच्छी उण निवेसिया सयलमुद्दासु ॥
सो **चालुक्क**सिरि**मूलराय–चामुडराय**रज्जेसु ।
**वल्लहराय**–णराहिव**दुल्लहराया**णमवि काले ॥
निच्च पि एकमती जाओ पज्जतचरियचारित्तो ।
सिरि**मूलराय**नरवइरज्जालयकुंरो **वीरो** ॥
तस्स उ सिरि–सरस्सइदेवीण पुढो पुढो निवास व ।
दो पुरिसपुडरीया जाया वसुहाए विक्खाया ॥
तत्थ य निहणियदोसो पयडियकमलोदओ दिणयरो व ।
सिरि**भीमएव**रज्जे **नेढो** त्ति महामई पढमो ॥
बीओ उ सरयससहरनिम्मलगुणरयणमदिरमुदार ।
निययप्पहापअ(अह)रियतरणी **विमलो** त्ति दडवई ॥
अह **भीमएव**नरवइवयणेण गहीयसयलरिउविहवो ।
**चड्डावल्ली**विसय स पहुवलद्ध ति भुजतो ॥
दट्ठूण तियसभवणारोहतपसत्थजतुनिस्सेणि ।
सिरि**नदिवद्धणा**वरणाम **अब्बुय**गिरिदमिम ॥
नणु विविहसविहायणघरमुत्तिम**तित्थ**मवि इमो सिहरी ।
इय जइ इमस्स उवरिं कारिज्जइ **उसहजिणभवणं** ॥
ता कयकिच्च मन्ने सजीवियव्व बल च लच्छि च ।
इय चिततो सिविणे **अंबाएवी**ए भणिओ सो ॥
जह भद्द ! सुदरमिम चितियमिय हिययइच्छिय कुणसु ।
तुज्झ विइज्जा होउ करिस्समहय पि साहेज्ज ॥

सिरि**भीमएव**नरञइ-**नेढाण** वि पत्थुयत्थुवएस ।
वियरइ देवी तक्खणमह सो तेहि वि अणुन्नाओ ॥
सिरि**रिसह**बिंबदिणयरउज्झोइयमज्झमूसियपडाय ।
सुविभत्तवि(चि)त्तसाल **जिण**सासणभणियनीईए ॥
पयडीहोउ **अं**बएवीउवइट्ठसनिवेसमि ।
**अब्बुयगिरि**णो उवरि **जिण**भवणमिण करावेइ ॥
अह **नेढ**महामइणो सिरि**कन्नएव**रज्जमि ।
जाओ निजयसधवलियभुवणो **धवलो** त्ति सचिविंदो ॥
तत्तो **रे**वतकयप्पसायसपत्तउत्तिमसमिद्धी ।
धणुहाविदेवयासनिहाणनिन्नट्ठउवसग्गो ॥
**जयसीह**देवरज्जे गुरुगुणवसउल्लसतमाहप्पो ।
जाओ भुवणाणदो **आणंदो** नाम सचिविंदो ॥
तस्स ससिविमलसीलालकारविरायमाणसव्वगी ।
गुरुविणय-पणयवच्छल्ल-धम्मकम्माणुरत्तमणा ॥
अहवा समग्गजयकयविम्हयगुणरयणपरमम़जूसा ।
**पउमावइ** त्ति णामेण विस्सुया पिययमा जाया ॥
अह **सिद्धराय**-सिरि**कुमरवाल**एवावणिदतिलयाण ।
पुत्त-भरतारविहुरियमिव दट्ठूण पुहइवीढ ॥
**आणंद**महामइणो तणओ जयसुकयसचएण व्व ।
**वयगरण-स्सिरिगरणा**रभमहाभारधुरधवलो ॥
**जयसीह**एव-सिरि**कुमरवाल**नरनायगाण रज्जेसु ।
सिरि**पुहइवाल**मती अवितहनामो इमो विहिओ ॥
अह **निन्नय**काराविय**जा**लिहारयगच्छ**रि**सहजिणभवणे ।
जणयकए जणणीए उण **पचासरयपा**सगिहे ॥
**चड्डावल्ली**यमि उ गच्छे मायामहीए सुहहेउ ।
**अणहिल्लवाडय**पुरे कराविया मडवा जेण ॥
जो रोहाइयवारसगे **सा**यणवाडयपुरे उ **स**तिस्स ।
**जि**णभवण कारविय मायामह**वो**ल्हस्स कए ॥
ता **अब्बु**यगिरिसिरि **नेढ-विमलजि**णमदिरे करावेउ ।
मडयमइव्वजणय मज्झे पुणो तस्स ॥

